# धर्म्मपुस्तकस्य शेषांशः।

अर्थात्

प्रभुयीशुख्रीष्टस्य चत्वारः सुसंवादाः

प्रेरितानां कर्म्मणामाख्यानं

उपदेशभविष्यद्वाक्यादिपत्राणि च।

---

एतानि सर्व्वाणि

इंलण्डीयबङ्गदेशीयपण्डितैः

यूनानीयभाषातो व्याकृतानि।

धर्म्मसमाजीयोपकारिणा मुद्राक्षराङ्कितानि च।



---

कलिकातानगरे।

१७७३ शाके ई सन १८५१।

# मथीलिखितः सुसंवादोऽयं।





## १ प्रथमोऽध्यायः।

ख्रीष्टस्य वंशावली, १८ तज्जन्मकथनञ्च।

१ इब्राहीमः सन्तानो दायूद् तदीयसन्तानस्य यीशुख्रीष्टस्य वंशावलीयम्।
२ इब्राहीमः पुत्र इस्हाक् इस्हाकः पुत्रो याकुब् याकुबः पुत्रो यिहू-
३ दास्तदीयभ्रातरश्च। तामार उदरे यिहूदा औरसपुत्रौ फारिस्सारहौ
४ द्वौ जज्ञाते ; तस्य फारिसः पुत्रो हिस्रोन् हिस्रोणः पुत्रोऽरम्। अरमः
पुत्रोऽम्मीनादब् अम्मीनादबः पुत्रो नहशोन् नहशोनः पुत्रः सल्मोन्।
५ राहव उदरे तस्य सल्मोन औरसपुत्रो बोयस् जज्ञे ; रूत उदरे बोयस
६ औरसपुत्र ओबेद् जज्ञे ओबेदः पुत्रो यिशयः। तस्य यिशयस्य पुत्रो राजा
दायूद् ; तस्य दायूदो राज्ञ औरसपुत्रो मृतस्योरीयस्य जायायां सुले-
७ मान् जज्ञे। सुलेमानः पुत्रो रिहबियम् रिहबियमः पुत्रोऽबीयो ऽबीयस्य
८ पुत्र आसाः। आसाः पुत्रो यिहोशाफट् यिहोशाफटः पुत्रो यिहोरम्। तं
९ यिहोरमः सन्तान उषीयः। उषीयस्य पुत्रो योथम् योथमः पुत्र आहस्
१० आहसः पुत्रो हिस्कीयः। हिस्कीयस्य पुत्रो मनशिः मनशेः पुत्र आम्मोन्
११ आम्मोनः पुत्रो योशीयः। बाबिल् नगरे प्रवसनात् कियत् पूर्व्वं तस्य योशी-
१२ यस्य सन्तानो यिखनीयस्तस्य भ्रातरश्च जज्ञिरे। बाबिलि प्रवसतो यिखनी-
१३ यस्य पुत्रः शियल्तीयल् जज्ञे शियल्तीयलः पुत्रः सिरुबाबिल् सिरुबा-
बिलः पुत्रो ऽबिहूद् ; अबिहूदः पुत्र इलियाकीम् इलियाकीमः पुत्रो
१४ ऽस्सूर्। अस्सूरः पुत्रः सादोक् सादोकः पुत्र आखीम् आखीमः पुत्र इलि-
१५ हूद्। इलिहूदः पुत्र इलियासर् ; इलियासरः पुत्रो मत्तन् मत्तनः पुत्रो
१६ याकुब् याकुबः पुत्रो यूषफ् स मरियमः पतिः। एतस्या मरियम उदरे
१७ यीशुः समुद्बभूव यं जनाः ख्रीष्टम् अर्थाद् अभिषिक्तं ब्रुवन्ति। इत्थम्
इब्राहीमो दायूदं यावत् सर्व्वे चतुर्द्दश पुरुषा एवम् आ दायूदो बाबिल्नगरे

प्रवासं यावत् चतुर्द्दश पुरुषाः, एवं बाबिलि प्रवसनकालाच्च ख्रीष्टं यावत् चतुर्द्दश पुरुषाः।

इत्थं यीशुख्रीष्टस्य जनिरभूत्। तदीया जननी मरियम्नामिका १८ कन्या युषफे वाग्दत्तासीत् तदा तयोः सङ्गमात् पूर्व्वं पवित्रस्यात्मनःसका- शात् तस्याः कन्याया गर्भोऽभवत् ततस्तस्याः पति र्युषफ् सज्जनत्वात् तस्याः १९ कलङ्कं प्रकाशयितुम् अनिच्छन् तां गुप्तं परित्यक्तुं मतिम् अकरोत्। स २० मनसा तदेव चिन्तयति तदानीं परमेश्वरस्य दूतः स्वप्ने दर्शनं दत्त्वा तस्मै कथितवान् हे दायूदः सन्तान युषफ् त्वं स्वीयां जायां मरियमं ग्रहीतुं भयं मा कार्षीः। यतस्तस्या उदरे य आस्ते स पवित्राद् आत्मनोऽभवत् २१ अपरं सा पुत्रं प्रसविष्यते तन्तु तस्य नाम यीशुरिति, अर्थात् त्रातेति करिष्यसि यस्मात् स स्वीयलोकान् तेषां पापेभ्यो मोचयिष्यति। इत्थं सति २२

'पश्य गर्भ्भवती पुत्रं कुमारी प्रसविष्यते।

इम्मानूयेल् तदीयं हि नामधेयं भविष्यति।'

इम्मानूयेल् अर्थाद् अस्माकं सहाय ईश्वरः। इति यद् वाक्यं भविष्य- २३ द्वादिना पूर्व्वम् ईश्वरः कथयामास तत् सफलम् अभवत्। अनन्तरं युषफ् २४ निद्रात उत्थाय परमेश्वरदूतस्य प्रत्यादेशात् स्वीयां जायां जग्राह किन्तु २५ सा यावत्कालं स्वीयप्रथमपुत्रं न प्रासूयत तावद् युषफ् तां नोपागच्छत् पुत्रस्य नाम यीशुरित्यकरोत्।

---

२ द्वितीयोध्यायः।

१ तारकादर्शनेन ज्योतिर्व्विदां यिरूशालमागमनं १३ युषफो यीशुमरीयमयोः मिसरानयनं १६ बैत्लिहिमि हेरोद्राजेन बालकानां हननं १९ इस्रायेल्देशं प्रति ख्रीष्टस्य पुनरागमनं नासरिद्ग्रामे निवासश्च।

तदनन्तरं हेरोद्नाम्नि राज्ञि सति यिहूदादेशीयबैत्लिहिम्नगरे यीशौ जाते सति कियन्तो ज्योतिर्विदः प्राच्या दिशो यिरूशालम्नगरम् एत्य कथितवन्तः, यिहूदीनां राजा यो ऽजायत स कुत्रास्ते? वयं प्राच्यां दिशि तिष्ठन्तस्तदीयजन्मसूचकम् कृत्तम् अपश्याम तस्मात् तं वन्दितुं समा-

३ गताः। राजा हेरोद् तद्वाक्यं निशम्य यिरूशालम्स्थितैः सर्व्वै र्जनैः
४ सार्द्धम् उद्विग्नः सन् सर्व्वान् प्रधानयाजकान् अध्यापकांश्चाहूय पप्रच्छ
५ ख्रीष्टः कुत्र जनिष्यते? ततस्ते प्रत्यवोचन् यिहूदीयदेशस्य बैत्लिहिम्
नगरे यतो भविष्यद्वादिभि र्लिखितम् एतादृशम् आस्ते।

६ 'सर्व्वासु राजधानीषु यिहूदीयस्य नीवृतः।
हे यिहूदीयदेशस्थे त्वं न क्षुद्रासि बैत्लिहिम्।
यस्मादस्माकमिस्रायेल्लोकान् यः पालयिष्यति।
तादृगेको महाराजस्त्वन्मध्य उद्भविष्यति।'

७ तदा नृपति र्हेरोद् तान् ज्योतिर्व्विद आहूय गुप्तं पृष्टवान् सा तारका
८ कदा दृष्टाभवदिति। अपरं तान् बैत्लिहिम् नगरं प्रेषयन् अवोचत् यूयं
गच्छत यत्नात् तं शिशुम् अन्विष्य तस्योद्देशे प्राप्ते वार्त्तां मह्यं कथयिष्यथ
९ ततोऽहमपि गत्वा तं वन्दिष्यामि। तदानीं नृपतेरेतादृशीम् आज्ञां
लब्ध्वा ते प्रातिष्ठन्त। ततः प्राच्यां तिष्ठन्तो यां तारकाम् अपश्यन् सा तारका
१० तेषाम् अग्रेऽग्रे गत्वा यत्र शिशुरास्ते तदुपरि स्थगिताऽभवत्। तत् तारकां
११ दृष्ट्वा तेऽतीवहर्षेणानन्दन्। अपरं गृहं प्रविश्य तन्मात्रा मरियमा सार्द्धं
शिशुम् दृष्ट्वा दण्डवत् प्राणमन्; अपरं स्वेषां धनसम्पत्तिं मोचयित्वा स्वर्ण-
१२ कुन्दुरुगन्धरसान् तस्मै दर्शनीयम् अददुः। अनन्तरं हेरोद्राजस्य समीपं
पुनर्गन्तुं स्वप्न ईश्वरेण निषिद्धाः सन्तो भिन्नमार्गेण स्वीयदेशम् अगमन्।

१३ तत्पश्चात् तेषु गतेषु परमेश्वरस्य दूतः स्वप्ने युषफे दर्शनं दत्त्वा कथित-
वान्, त्वम् उत्तिष्ठ शिशुं तन्मातरञ्च गृहीत्वा मिसर्देशं प्रति पलायस्व
सर्वं यावद् अहं त्वां वार्त्तां न वदिष्यामि तावत् तत्रैव तिष्ठ यतो
१४ हेरोद् नृपतिः शिशुं हन्तुम् मृगयिष्यते। तदा युषफ् उत्थाय रजन्यां
शिशुं तन्मातरञ्च गृहीत्वा मिसर्देशं गतवान् एवं राज्ञो हेरोदो मरण-
पर्य्यन्तं तस्मिन् देशे न्यवसत्।

१५ तेनाहं 'मिसरो देशात् स्वीयं पुत्रं समाह्वयम्' यदेतद् वाक्यं भवि-
ष्यद्वादिनेश्वरो ऽकथयत् तत् सफलम् अभूत्।

अनन्तरं हेरोद् स्वं ज्योतिर्व्विद्भि र्वञ्चितं विज्ञाय अत्यक्रुध्यत्, एवंपूर्व्वं १६ तान् विशिष्य पृष्ट्वा यस्मिन् दिने तेषां तारकाया दर्शनं जातं तेभ्यस्तत् श्रुतवान् आ तद्दिनाद् गणयित्वा द्वितीयवत्सरप्रविष्टवयस्का यावन्तः शिशवस्तस्मिन् बैत्लिहिमनगरे तस्य सीमायाञ्च संस्थिता लोकान् प्रहित्य तान् सर्व्वान् अघातयत्। अतएव। १७

'क्रन्दनस्य विलापस्य महाशोकस्य च ध्वनिः।

रामायां श्रूयते लोकै राहेल् पुत्त्रेषु रोदिति।

न मन्यते प्रबोधञ्च विद्यन्ते नैव ते यतः।'

एषा या कथा यिरिमियनाम्ना भविष्यद्वादिना प्रोक्ता सा तदा सफलाभूत्। १८

ततः परं राज्ञि हेरोदि मृते सति परमेश्वरस्य दूतो मिसर् देशे १९ यूषफे स्वप्ने दर्शनं दत्वा कथितवान् उत्तिष्ठ शिशुं तन्मातरञ्च समादाय २० पुनरिस्रायेल्देशं याहि ये शिशुं हन्तुम् अमृगयन्त ते मृताः। तदा स २१ उत्थाय शिशुं तन्मातरञ्च समादाय इस्रायेल्देशं गतवान्। किन्तु २२ यिहूदीयदेशे आर्खिलायनामा राजकुमारः स्वीयपितुः सिंहासने समुपविश्य राजत्वं करोतीति निशम्य तत्र गन्तुम् अशङ्कत। पश्चात् स्वप्ने २३ ईश्वरेण प्रबोधितः सन् गालील्देशीयैकप्रदेशं गत्वा नासिरन्नाम्नि ग्रामे न्यवसत् तेन तं नासिरीय इति वदिष्यन्ति एषा या कथा भविष्यद्वादिभिरुक्तासीत् सा सफलाभवत्।

---

३ तृतीयोऽध्यायः।

१ योहनचरित्रं ७ तस्य मज्जनस्य प्रचारः १३ खीष्टस्य मज्जनञ्च।

तस्मिन्नेव समये योहन्नामा मज्जयिता यिहूदीयदेशस्य प्रान्तर १ उपस्थाय प्रचारयन् अकथयत्, मनः परावर्त्तयत स्वर्गीयराजत्वं २ समीपमागमत्।

३ 'परमेशस्य पन्थानं परिष्कुरुत सर्व्वतः।

तस्य राजपथञ्चैव समानं कुरुताधुना।
इतीदं प्रान्तरे वाक्यं वदतः कस्यचिद्रवः।

एषा कथा यिशायियभविष्यद्वादिना तं योहनम् उद्दिश्य कथितासीत्।
४ योहनो वसनम् महाङ्गलोमभिः प्रोतं तस्य कट्यां चर्म्मकटिबन्धनं शलभा
५ वन्यमधूनि च तस्य भक्ष्यद्रव्याण्यासन्। तदानीं यिरूशालम् नगरनिवा-
६ सिनः सर्व्वे यिहूदिदेशीया यर्द्दननद्या उभय तटस्थाश्च लोका निर्गत्य
तत्समीपम् आगत्य स्वीयस्वीयपापान्यङ्गीकृत्य तस्यां यर्द्दननद्यां योहना
मज्जिता अभवन्।

७ अपरम् बहून् फिरूशिनः सिदूकिनश्च लोकान् मज्जनार्थम् निज-
निकटम् आगतान् दृष्ट्वा स तान् अवोचत् रे सर्पवंशा आगामिकोपात्
८ पलायितुं युष्मान् कोऽचेतयत्? मनः परावर्त्तनोपयुक्तं फलम् उत्पादयत
किन्त्वस्माकं तातइब्राहीम् अस्तीति स्वीय मनःसु चिन्तयित्वा मा कथयत।
९ यस्माद् अहं युष्मभ्यं कथयामि, ईश्वर एतेभ्यः पाषाणेभ्य इब्राहीमसन्ता-
१० नान् उत्पादयितुं शक्नोति। एवं महीरुहमूलेऽद्यापि कुठारो लागित
आस्ते तस्माद् यः पादप उत्तमफलानि न फलति स छिद्यमानो वह्नौ
११ निक्षेप्स्यते। अपरम् अहं युष्मान् मनः परावर्त्तनार्थं जले मज्जयामीति
सत्यं किन्तु मत्पश्चाद् य आगच्छति स मत्तोपि महान् अहं तदीय-
पादुकावहनार्थमपि योग्यो न भवामि, स युष्मान् वह्निवत्पवित्रआत्मनि
१२ मज्जयिष्यति। तस्य हस्ते सूर्पमास्ते स तेन स्वशस्यानि सम्यक् प्रस्फोट्य
स्वीयगोधूमान् सर्व्वान् संगृह्य निजभाण्डागारे स्थापयिष्यति किन्तु
वुषाण्यनिर्व्वाणाग्निना दाहयिष्यति।

१३ अनन्तरं यीशुः योहना मज्जितो भवितुं गालील् प्रदेशात् यर्द्दने तन्नि-
१४ कटम् आगच्छत्। किन्तु योहन् तं निषिध्य प्रोक्तवान् त्वं किं मत्समीपम्
१५ आगतोसि वरं त्वया ममावश्यावगाहितव्यम्। तदा यीशुः कथितवान्
इदानीम् अनुमतिं कुरु यत इत्थं सर्व्वं धर्म्मा अस्माभिः साधनीयाः
१६ ततः सोऽमन्यत। तदा यीशुः मज्जितः सन् तत्क्षणात् तोयाद् उदतिष्ठत्

तेन तदर्थं मेघद्वारे मुक्ते सति स ईश्वरस्यात्मानं कपोतवद् अवरुह्य स्वस्योपरि सन्तिष्ठमानम् अपश्यत्। अपरम् एष मदीयः प्रियः पुत्र १७ एतस्मिन्नेव मम परमः सन्तोष एतादृशी वैहायसी वाक् समभवत्।

---

४ चतुर्थोऽध्यायः।

१ शैतााना ख्रीष्टस्य परीक्षणं १२ कफर्नाहूमि तस्य वासः १७ तदीयसुसंवादस्य प्रचारणं १८ पितर आन्द्रियो याकुब् योहन् चैतेषाम् आह्वानं २२ ख्रीष्टेन रोगिणां रोगमोचनञ्च।

ततः परं यीशुः शैताना परीक्षितो भवितुम् आत्मना प्रान्तराया- १ कर्षितः सन् चत्वारिंशद् अहोरात्राणि निराहारस्तिष्ठन् क्षुधितोऽभवत्। २ तदा परीक्षकः तत्समीपम् आगत्य कथितवान् यदि त्वम् ईश्वरस्य पुत्रो ३ भवसि तर्ह्याज्ञया पाषाणान् एतान् पूपान् कुरु। ततः स प्रत्यवोचद् ४ इदं लिखितम् अस्ति केवलेन पूपेन मानवो न जीवति किन्त्वीश्वरस्य वदनाद् यद् यद् वचो निर्गच्छति तेनैव जीवति। तदा शैतान् तं ५ पुण्यनगरं नीत्वा मन्दिरस्य चूडोपरि स्थापयित्वा गदितवान् यदि त्वम् ईश्वरस्य पुत्रो भवसि तर्ह्यस्याधः पत यत एतादृशं लिखितम् आस्ते। यथा ६

'आज्ञापयिष्यति स्वीयान् दूतान् स परमेश्वरः।
रक्षितुं सर्व्वमार्गे त्वां तेन त्वच्चरणे यथा।
न लगेत् प्रस्तराघातस्त्वां धरिष्यन्ति ते तथा।

तदा यीशुस्तम् अभाषत इत्यपि लिखितम् अस्ति त्वं निजप्रभुं परमेश्वरं ७ मा परीक्षस्व। तदनन्तरं शैतान् तां पुनरपि उच्चतमपर्व्वतोपरि नीत्वा ८ जगतः सर्व्वराज्यानि तदैश्वर्य्याणि च दर्शयित्वा तमवोचत् यदि त्वं ९ दण्डवद् भूत्वा मां प्रणमसि तर्ह्यहम् एतानि सर्व्वाणि तुभ्यं दास्यामि। तदानीं यीशुस्तस्मै कथितवान् शैतान् त्वं दूरीभव लिखितम् आस्ते त्वं १० निजप्रभुं परमेश्वरं प्रणंस्यसि केवलं तमेव सेविष्यसे। तदा शैताना तस्मिन् ११ परित्यक्ते सति स्वर्गीया दूताः समागत्य तं सेवितुम् आरभन्त।

ततः परं योहन् कारायां बद्धोऽभूद् एतां कथां श्रुत्वा यीशु र्गालील्ं १२

१३ गतवान्। तदनन्तरं स नासिरिद्ग्रामं परित्यज्य सागरस्य तटे सिवूलून्
नप्तालो चानयोरुभयप्रदेशयोः सीम्नो मध्यवर्त्तिनं कफर्नाहूम्नगरं
१४ गत्वा तत्र न्यवसत्। तस्मात्

'सिन्धोः पार्श्वे तु यर्द्दनः पारेऽन्यदेशिगालिलि।
अन्धकारे तु ये लोका उपविश्य स्थितास्तथा।
१५ मृत्योर्द्देशे च छायायां ये लोकाः समुपाविशन्।
तेषान्तु सम्मुखे दीप्तिः सुप्रकाशं करिष्यति।'

१६ एषा या कथा यिशायियभविष्यद्वादिना प्रोक्तासीत् सा सफलाभूत्।
१७ ततः परं यीशुः सुसंवादं प्रचारयन् एतां कथां कथयितुम् आरभत
मनः परावर्त्तयत स्वर्गीयराज्यं समीपमभूत्।
१८ अनन्तरं यीशु गालील: सागरस्य तटेन गच्छन् गच्छन् आन्द्रियं
तद्भ्रातरं शिमोनम् अर्थाद् यं पितरं वदन्ति जनास्तौ समुद्रे जालं
१९ निक्षिपन्तौ दृष्टवान् यतस्तौ मत्स्यधारिणावास्ताम्। तदा स तावाहूय
कथितवान् युवां मत्पश्चाद् आगच्छतम् अहं युवां मानुषधारिणौ करि-
२० ष्यामि। तेनैव तौ जालं परित्यज्य तस्य पश्चाद् अगच्छतां। ततःपरं तस्मात्
२१ स्थानाद् गच्छन् गच्छन् स सिवदेः पुत्रं याकुबं योहन्नामानञ्च भ्रातरौ
२२ पित्रा सार्द्धं नौकायां जालस्य जीर्णोद्धारं कुर्व्वन्तौ दृष्ट्वा तावाहूयत्।
तेन तत्क्षणात् तौ नावं स्वपितरञ्च परित्यज्य तस्य पश्चाद्गामिनौ जातौ।
२३ ततः परं भजनभवने समुपदिश्य समुपदिश्य राज्यस्य सुसंवादं प्रचारयन्
प्रचारयन् लोकानां सर्व्वप्रकाररोगान् सर्व्वप्रकारपीडाश्च प्रशमयन् प्रशम-
२४ यन् यीशुः कृत्स्नगालील्देशे भ्रमितुम् आरभत। तेन कृत्स्नं सुरियादेशं
तस्य सुख्याति र्व्याप्नोत्; अपरं भूतग्रस्तापस्मारिपक्षाघातिप्रभृतयो यावन्तो
लोका नानाविधरोगैः कष्टं प्राप्नुवन् तेषु सर्व्वेषु तस्य समीपम् आनीतेषु
२५ सत्सु स तान् निरामयान् अकरोत्। एतेन गालील्दिकापलि यिरूशालम्
यिहूदीयदेशेभ्यो यर्द्दनः पाराच्च बहवो लोकास्तस्य पश्चाद् अगच्छन्।

## ५ पञ्चमोऽध्यायः।

१ ख्रीष्टस्योपदेशारम्भः ३ धन्यलोकानां निर्णयः १३ ख्रीष्टस्य शिष्याणां लवणदीप्तिरूपत्वयोः कथनं १७ व्यवस्थां सिद्धां कर्त्तुं ख्रीष्टस्यावतारः २१ वधक्रोधयोर्निषेधः २७ परदारगमननिषेधः ३३ शपननिषेधः ३८ हिंसननिषेधः ४३ शत्रुभिः सार्द्धं प्रेम्नो व्यवस्था च।

तदनन्तरं स लोकनिवहं विलोक्य पर्व्वतं गत्वा तदुपर्य्युपाविशत्। तदा १
शिष्येषु तत्समीपम् आगतेषु स तेभ्य इमा उपदेशकथाः कथयितुम् आर- २
भत। अभिमानविहीना लोका धन्या यतः स्वर्गीयराज्ये तेषाम् अधि- ३
कारः। खिद्यमाना लोकाश्च धन्या यतस्तैः सान्त्वना लप्स्यते। नम्रशीला ४ ५
लोकाश्च धन्या यतस्ते पृथिव्याम् अधिकारं प्राप्स्यन्ति। धर्म्माय बुभुक्षिता- ६
स्तृषिताश्च लोका धन्या यतस्ते परितर्प्स्यन्ति। कृपालवो लोका धन्या यतस्ते ७
कृपां प्राप्स्यन्ति। निर्म्मलान्तःकरणा लोकाश्च धन्या यतस्त ईश्वरं द्रक्ष्य- ८
न्ति। मेलनकारका लोकाश्च धन्या यतस्त ईश्वरस्य सन्ताना इति विख्या- ९
स्यन्ति। धर्म्मकारणात् ताडिता लोकाश्च धन्या यतस्तेषां स्वर्गीयराज्ये- १०
ऽधिकारः। यदा मानवा मम नामहेतो र्युष्मान् निन्दन्ति प्रहरन्ति च ११
तथा मृषा नाना दुर्व्वाक्यानि वदन्ति तदा यूयं धन्याः। तदानीं यूयम् १२
आनन्दत तथा भृशं ह्लादध्वञ्च यतः स्वर्गे प्रचुरं फलं प्राप्स्यथ, ते युष्माकं पूर्व्वीय-
भविष्यद्वादिनोऽपि तादृग् अताड्यन्।

यूयं पृथिव्यां लवणरूपाः किन्तु यदि लवणस्य लवणत्वम् अपयाति तर्हि १३
तत् केन प्रकारेण स्वादुयुक्तं भविष्यति? तत् कस्यापि कार्य्यस्यायोग्यत्वात् केवलं बहिः
प्रक्षेप्तुं नराणां पदतलेन दलयितुञ्च योग्यं भवति। यूयं जगति दीप्तिरूपाः; १४
पर्व्वतोपरि स्थितं नगरं गुप्तं भवितुं न शक्नोति। अपरं मनुजाः प्रदीपान् प्रज्वाल्य १५
द्रोणाधो न स्थापयन्ति, किन्तु दीपाधारोपर्य्येव स्थापयन्ति, तेन ते दीपा
गेहस्थितान् सकलान् प्रकाशयन्ति। येन मानवा युष्माकं सत्कर्म्माणि विलोक्य युष्माकं १६
स्वर्गस्थं पितरं धन्यं वदन्ति, तेषां समक्षं युष्माकं दीप्तिस्तादृक् प्रकाशताम्।

अहं व्यवस्थां भविष्यद्वाक्यञ्च लोप्तुम् आगतवान्, इत्थं मानुभवत, ते द्वे लोप्तुं १७
नागतवान् किन्तु सफले कर्त्तुम् आगतोस्मि। अपरं युष्मान् तथ्यं वदामि यावद् १८

आकाशपृथिव्यौ न मंक्ष्यतः, तावत् समस्ते सफले न सति व्यवस्थाया एका
१९ मात्रा विन्दुरेकश्च न लोप्स्यतः। अतो य एतासाम् आज्ञानाम् अति-
क्षुद्राम् एकाम् आज्ञामपि लङ्घते लोकानपि तथैव शिक्षयति स स्वर्गीय-
राज्ये सर्व्वेभ्यः क्षुद्र इति विख्यास्यति किन्तु यस्तां पालयति तथैव शिक्ष-
यति च स जनः स्वर्गीयराज्यस्य मध्ये प्रधानत्वेन विख्यातो भविष्यति।
२० अपरञ्च युष्मभ्यम् अहं कथयामि, अध्यापकेभ्यः फिरूशिलोकेभ्यश्च
युष्माकं धर्म्मानुष्ठानस्योत्तमत्वे न सति यूयम् ईश्वरस्य राज्यं कदापि प्रवेष्टुं
नैव शक्ष्यथ।

२१　त्वं नरं न हन्या, यतो यो नरं हन्ति स विचारे दण्डयोग्यो भविष्यति
२२ पूर्व्वीयलोकान् प्रतीत्युक्तम् आसीत् तद् यूयं श्रुतवन्तः। किन्त्वहं युष्मान्
ब्रवीमि योऽकारणं स्वीयभ्रात्रे क्रुध्यति स विचारे दण्डयोग्यो भविष्यति
यः स्वीयभ्रातरं निर्ब्बोधं वक्ति स महासभायां दण्डयोग्यो भविष्यति त्वं
मूढ इतिवाचं यः स्वीयभ्रातरं वदति स नरकाग्नौ दण्डयोग्यो भविष्यति।
२३ अतो वेद्याः समीपं स्वीयनैवेद्ये समानीतेऽपि स्वीयभ्रातुः समीपे केनापि
२४ कारणेनापराधी विद्यसे तदानीं यदि तव तस्य स्मृति जायते तर्हि तस्या
वेद्याः सम्मुखे निजनैवेद्यं निधाय तदैव गत्वा पूर्व्वं स्वीयभ्रात्रा सह मिल
२५ पश्चाद् आगत्य स्वीयनैवेद्यम् उत्सृज्यसे। अन्यञ्च यावद् विवादिना
सार्द्धं पथि तिष्ठसि तावत् तेन सार्द्धं मिल नो चेद् विवादी त्वां
विचारयितरि समर्पयति विचारयिता च प्रहारिणि समर्पयति तेन
२६ त्वं कारायां बध्येथाः, तर्हि तुभ्यम् अहं सत्यं कथयामि अवशिष्ट-
कपर्द्दके न परिशोधिते सति तस्मात् स्थानात् कदापि वहिरागन्तुं
त्वं नैव शक्ष्यसि।

२७　त्वं न व्यभिचरेति पूर्व्वीयलोकेभ्यः कथितं युष्माभिः श्रुतं किन्त्वहं
२८ युष्मान् वच्मि यदि कश्चित् कामतो योषितं पश्यति तर्हि मनसा स
२९ तया सार्द्धं व्यभिचरति। तस्मात् तव दक्षिणं चक्षु र्यदि त्वां बाधते तर्हि
तद् उत्पाट्य दूरे क्षिप यतस्तव सर्व्ववपुषो नरके निक्षेपाद् एकाङ्गनाशो

लाभो भवति। अन्यच्च यदि त्वदीयो दक्षिणकरस्त्वां बाधते तर्हि तं ३०
छित्त्वा दूरे निक्षिप यस्मात् तव कृत्स्नशरीरस्य नरके निक्षेपाद् एका-
ङ्गस्य विनाशो लाभो भवति।

उक्तमस्ति यदि कश्चित् स्वजायां त्यक्तुमिच्छति तर्हि स तस्यै त्याग- ३१
पत्रं दद्यात्; किन्त्वहं युष्मान् भाषे व्यभिचारं विना यः स्वजायां परि- ३२
त्यजति स तां व्यभिचारयति यस्तु जनस्तां परित्यक्तां विवहति सोपि
व्यभिचारं करोति।

त्वं मृषा शपथमकृत्वा ईश्वराय शपथं पालय, पूर्व्वीयलोकेभ्य उक्तमिद ३३
मपि युष्माभिः श्रुतं किन्त्वहं युष्मान् वच्मि कमपि शपथं मा कार्ष्ट, अर्थात् ३४
स्वर्गेण न यतः स ईश्वरस्य सिंहासनं पृथ्व्या च न यतः सा तस्यपादपीठं ३५
यिरूशालमापि न यतस्तत् महाराजस्य पुरं स्वशिरसापि न यतस्तस्यैक- ३६
कचमपि शुक्लं कृष्णं वा कर्त्तुं त्वं न शक्नोषि। अपरञ्च यूयं कथोपकथने ३७
स्वीकृतास्वीकृताभ्याम् अधिकं वाक्यं नैव कथयत यत एतस्माद् अधिकं
यत् तत् पापात् समुत्पद्यते।

अपरं चक्षुषो विनिमयेन चक्षुः, दन्तस्य च दन्तः पूर्व्वीयलोकेभ्यः कथित- ३८
मेतद् युष्माभिः श्रुतं; किन्त्वहं युष्मान् वच्मि यूयं हिंसकं न व्याहत ३९
किन्तु केनचित् त्वद्दक्षिणकपोले चपेटेनाहते तस्मै वामकपोलं परावर्त्तय।
यदि कश्चिज् जनस्त्वया सार्द्धं विवदमानस्त्वदीयपरिधेयं ग्रहीतुम् ४०
इच्छति तर्हि तस्मै वसनम् उत्तरीयमपि प्रदेहि। एवं क्रोशैकं त्वां नेतुं ४१
केनचित् त्वयि बलाद् श्रियमाणे सति तेन सहितस्त्वं क्रोशद्वयं याहि।
यस्तु जनस्त्वां किमपि याचते तस्मै तत् प्रदेहि, एवं केनचित् त्वाम् ऋणे ४२
परियाचिते तस्मै जनाय विमुखो मा भव।

स्वसमीपवासिनि प्रीयस्व किन्तु रिपुम् ऋतीयस्व, इतिपूर्व्वोक्तमपि ४३
युष्माभिः श्रुतम्; किन्त्वहं युष्मान् भाषे यूयं रिपावपि प्रीयध्वं ये युष्मान् ४४
शपन्ति तेभ्य आशिषं दत्त ये युष्मान् ऋतीयन्ते तेषां क्षेमं कुरुत ये युष्मान्
निन्दन्ति ताडयन्ति च तेषां कृते प्रार्थयध्वम्। तेन यः सदसल्लोकोपरि ४५

रविमुदाययति धार्म्मिकाधार्म्मिकोपरि तोयं वर्षयति च तादृशस्य स्वर्गस्थ-
४६ पितुर्यूयं सन्ताना भविष्यथ। ये युष्मासु प्रीयन्ते यदि यूयं तेष्वेव प्रीयध्वे
तर्हि तेन युष्माकं किं फलं भविष्यति? चण्डाला अपि किमीदृशं न
४७ कुर्व्वन्ति? अपरञ्च यदि यूयं स्वीयभ्रातृभ्यएव नमस्कुरुथ तर्हि तत्
किं महत् कर्म्म कुरुथ? देवपूजयितारः किम् एतादृशं कर्म्म न
४८ कुर्व्वन्ति? अतएव युष्माकं स्वर्गस्थितः पिता यथा सम्पूर्णस्तथैव यूयमपि
सम्पूर्णा भवत।

---

६ षष्ठाध्यायः।

१ धर्म्मकर्म्मकथा २ दानव्यवस्था ५ प्रार्थनाव्यवस्था १६ उपोषणव्यवस्था १९ धनसञ्चयोपदेशः २४ धर्म्मचेष्टाकर्त्तव्यता च।

१ अपरञ्च यूयम् अवधानं कुरुत मानुषान् प्रदर्शयितुं तेषां गोचरे
धर्म्मकर्म्माणि मैव कुरुत यस्माद् यदि युष्माभिस्तादृशानि क्रियन्ते
तर्हि युष्माकं स्वर्गस्थस्य पितुः सकाशाद् युष्माकं किमपि सुफलं नैव
भविष्यति।

२ त्वं यदा ददासि तदा कपटिनो यद्वत् मानवेभ्यः प्रशंसां प्राप्तुं
भजनभवने राजमार्गे च तूरीं वादयन्ति तथा मा कार्षीः; तुभ्यमहं
३ सत्यं कथयामि ते जनाः स्वीयफलं परिप्राप्नुवन्। किन्तु त्वं यदा दानं
ददासि तदा निजदक्षिणः करः किं कर्म्म करोतीति वामं करं मैव
४ विज्ञापय। तेनैव त्वदीयं दानं गुप्तं भविष्यति एवं यस्त्वदीयः पिता गुप्तं
कर्म्म परिपश्यति सएव तुभ्यं सप्रकाशं फलं प्रदास्यति।

५ यदा च प्रार्थयसे तदा कपटिनइव मा कुरु यतस्ते भजनभवने राज-
मार्गे च तिष्ठन्तो लोकदर्शनार्थं प्रार्थयितुं प्रीयन्ते युष्मानहं सत्यं वच्मि ते
६ स्वफलं प्राप्नाः। अतः प्रार्थनाकाले त्वं गृहान्तः प्रविश्य द्वारं रुद्ध्वा तव गुप्तस्य-
पितरं प्रार्थयस्व तेन यस्तव पिता गुप्तं पश्यति स तुभ्यं सप्रकाशं फलं दास्यति।
७ यदा च प्रार्थयध्वे तदा देवार्च्चकवत् पुनरुक्तिं मा कुरुत यतस्ते बुध्यन्तेऽधिक-

वचस्युक्तेऽस्माकं प्रार्थना ग्राहिष्यते। यूयं तेषामिव मा कुरुत यतो यद् यत् ८
प्रयोजनं तद् याचनात: पूर्व्वं युष्माकं पिता जानाति। अत इत्थं प्रार्थयध्वं ९
हे अस्माकं स्वर्गस्थपितस्त्वन्नाम पूज्यं भवतु। तव राजत्वं भवतु त्वदिच्छा १०
स्वर्गे यादृशी पृथिव्यामपि तादृशी सफला भवतु। अस्माकमावश्यकमाहा- ११
रमद्य देहि। अस्माभि र्यथा स्वापराधिन: क्षम्यन्ते तथास्माकम् अपराधाः १२
क्षम्यन्ताम्। अस्मान् परीक्षां मानय किन्त्वशुभाद् रक्ष। एवं राजत्व- १३
गौरवपराक्रमा: सर्व्वे सदैव तव सन्तु। अपरञ्च यदि यूयमन्येषाम् अप- १४
राधान् क्षमध्वे तर्हि युष्माकं स्वर्गस्थपितापि युष्मान् क्षंस्यते। किन्तु यदि १५
यूयम् अन्येषाम् अपराधान् न क्षमध्वे तर्हि युष्माकं पितापि युष्माकम्
अपराधान् न क्षंस्यत।

उपवासकाले मनुष्यान् उपवासं ज्ञापयितुं यथा कपटिन: स्वमुखानि १६
म्लानयन्ति यूयं तथा न कुरुत; अहं युष्मान् सत्यं वदामि ते स्वफलं
प्राप्नुवन्। यदा त्वम् उपवासं करोषि तदा यत्परैस्त्वम् उपवसन्निव १७
न दृश्यसे किन्त्वगोचरो यस्त्वदीय: पिता तेनैव दृश्यसे तदर्थं त्वया १८
तैलेन मस्तकं संमर्द्दितां वदनञ्च प्रक्षाल्यतां तेन गुप्तदर्शी त्वदीय: पिता
तुभ्यं सप्रकाशं फलं प्रदास्यति।

अपरं यत्र कीटकलङ्काः क्षयं नयन्ति चौराश्च सन्धिं कर्त्तयित्वा चोर- १९
यितुं शक्नुवन्ति तादृक्पृथ्व्यां धनं न सञ्चिनुत; किन्तु यत्र कीटकलङ्का २०
न क्षयं नयन्ति चौराश्च सन्धिं कर्त्तयित्वा चोरयितुं न शक्नुवन्ति तादृशे
स्वर्गे धनं सञ्चिनुत। यतो यत्र युष्माकं धनं तत्र युष्माकं मनः। २१
नयनं शरीरस्य प्रदीपस्वरूपं तस्मात् तावकीने नयने यदि प्रसन्ने भवत- २२
स्तर्हि तदीयं कृत्स्नं शरीरं दीप्तिविशिष्टं भविष्यति। अतएव या तु २३
दीप्तिस्त्वयि परिविद्यते सा चेद् अन्धकारो भवति तर्हि सोऽन्धकार:
कियान् महान्।

कोपि मनुजो द्वौ प्रभू सेवितुं न शक्नोति यत एकस्मिन् प्रीयमानोऽन्यस्मिन् २४
ऋतीयते यद्वा एकस्मिन् मनो निधायान्यमवजानाति तथा यूयमपीश्वरं

२५ धनञ्च सेवितुं न शक्नुथ। पुनरहं युष्मान् वच्मि प्राणधारणाय किं भोक्ष्यामहे? किं पास्यामः? कायरक्षार्थं किं परिधास्यामः? इति न चिन्तयत
२६ भोज्यात् प्राणा वस्त्राद् वपुः किं न श्रेष्ठं?नभसः पक्षिणः पश्यत ते न वपन्ति न कृन्तन्ति भाण्डागारे न सञ्चिन्वन्ति च तथापि युष्माकं स्वर्गस्थपिता
२७ तेभ्यो भक्ष्यं ददाति। यूयं किं तेभ्यः श्रेष्ठा न? युष्माकं कोपि चिन्तयित्वा
२८ स्वायुषः क्षणमपि वर्द्धयितुं किं शक्नोति? तथा वस्त्रार्थं कुतश्चिन्तयथ?
२९ क्षेत्रजानि पुष्पाणि कथं वर्द्धन्ते तदालोचयत। तानि सर्व्वाणि तन्तून् नोत्पादयन्ति किमपि कार्य्यं न कुर्व्वन्ति च ततोहं युष्मान् वच्मि सुले-
३० मान् एतादृगैश्वर्य्यवानपि तत्पुष्पवद् भूषितो नासीत्। अतोद्य विद्यमानं श्वश्चुल्ल्यां क्षेप्स्यमानं क्षेत्रजपुष्पम् ईश्वरश्चेद् इत्थं भूषयति तर्हि हे स्वल्प-
३१ प्रत्यया युष्मान् किं न परिधापयिष्यति? तस्माद् वयं किं भोक्ष्यामहे? किं
३२ पास्यामः? किं परिधास्यामः? इति न चिन्तयत। यतो देवार्च्चका एतानि सर्व्वाणि चेष्टन्ते,एवम् एतानि वस्तूनि युष्माकं प्रयोजनीयानीति युष्माकं
३३ स्वर्गस्थपिता वेत्ति। अत आदाववीश्वरस्य राज्यं धर्म्मञ्च चेष्टध्वं तत
३४ एतानि सर्व्वाणि वस्तूनि युष्मभ्यं प्रदायिष्यन्ते। श्वो निमित्तं यूयं मैव परिचिन्तयत यतः श्वएव स्वार्थं चिन्तयिष्यति अद्यतनी या चिन्ता सैवाद्यनिमित्तं प्रचुरतरा भवति

---

७ सप्तमोऽध्यायः।

१ दोषीकरणनिषेधः ७ प्रार्थनोपदेशः १२ संकीर्णद्वारेण प्रवेशोपदेशः १५ अस्मत-भविष्यद्वादिभ्यः सावधानतोपदेशः २१ ईश्वरेष्टक्रियाया आवश्यकर्त्तव्यता २४ ज्ञान्यज्ञानिनो दृष्टान्तः २८ खीष्टोपदेशस्येयं समाप्तिश्च।

१ यूयं यथा दोषीकृता न भवेयुस्तदर्थम् अन्यं दोषिणं मा कुरुत। यतः
२ परं यादृशेन दोषेण यूयं दोषिणं कुरुथ तादृशेन दोषेण यूयमपि दोषी-कृता भविष्यथ येन च परिमाणेन यूयं मात तेनैव मानेन युष्मदर्थं
३ मायिष्यते। स्वनेत्रे या नासा विद्यते ताम् अनालोच्य तव सहजस्य लोचने यत् तृणमास्ते
४ तदेव कुतः पश्यसि? तव स्वनेत्रे नासायां विद्यमानायां हे भ्रातः तव नेत्रात् तृणं

निर्वापयितुम् अनुमन्यस्वेति स्वभ्रातरं कथं वदसि ? हे कपटिन् पूर्व्वं ५
स्वनेत्रान्नासां निर्वापय तेन दृष्टौ प्रसन्नायां तव भ्रातु र्नेत्रात्तृणं निर्वाप-
यितुं शक्ष्यसि। कुक्कुरेभ्यः पवित्राणि वस्तूनि मैव प्रयच्छत तथा शूकरा- ६
णाम् अग्रतो मुक्ता न निक्षिपत यतस्ते तानि चरणै र्दलयिष्यन्ति परा-
वृत्य युष्मान् विदारयिष्यन्ति च।

याचध्वं ततो युष्मभ्यं दायिष्यते मृगयध्वं तत उद्देशं लप्स्यध्वे द्वारम् ७
आहत ततो युष्मदर्थं द्वारं मोचयिष्यते। यतो यो याचते स लभते यो ८
मृगयते स उद्देशं लभते यस्य द्वारमाहन्ति तदर्थं द्वारं मोच्यते। पुत्रेण ९
पूपं पितरि याचिते तस्मै पाषाणं ददाति, मीनं याचिते तस्मै सर्पं ददाति; १०
युष्माकम् ईदृशः कोस्ति ? अतो यूयम् अपकृष्टा अपि स्वबालेभ्यः प्रकृ- ११
ष्टानि वस्तूनि दातुं यदि वित्थ तर्हि युष्माकं स्वर्गस्थपिता स्वयाचकेभ्यः
प्रकृष्टानि वस्तूनि किं न दास्यति ? अन्येभ्यो यादृशव्यापारं वाञ्छथ यूयमपि १२
तान् प्रति तादृग् व्यापारमेव प्रकुरुत यस्माद् व्यवस्थाया भविष्यद्वादिनाञ्च
वाक्यानाम् एतदेव सारम्।

क्षुद्रद्वारेण प्रविशत यतो नरकं गन्तुं यद्द्वारं तद् वृहत् यस्य पन्थाः १३
सोपि वृहन् अनेके च तेन प्रविशन्ति। किन्तु स्वर्गगमनाय यद् द्वारं तत् १४
कीदृक् क्षुद्रतरम् अपरं यो मार्गः सोपि कीदृग् दुर्गमतरः तदुद्देशका-
रिणश्च कतिस्तोकाः।

ये मेषरूपेण युष्मान् उपायान्ति किन्त्वन्तर्दुरन्ता वृकास्तादृग्नृत- १५
भविष्यद्वादिभ्योऽवधत्त यूयं फलैस्तान् परिचेष्यथ। मनुजाः कण्टकि १६
वृक्षेभ्यो द्राक्षाफलानि वा गोक्षुरेभ्य उडुम्बरफलानि शातयन्ति
किं ? तद्वद् उत्तमवृक्ष एवोत्तमफलं फलति कुवृक्षस्तु कुत्सितफलं १७
फलति। सुवृक्षः कदापि कुफलं न फलति तथा कुवृक्षः कदापि १८
सुफलं न फलति। एवं यस्तु महीरुहः कुत्सितं फलं फलति स १९
छिन्नो वह्नौ निक्षिप्तो भवति। अतएव यूयं फलैरेव तेषां परिचयं २०
प्राप्स्यथ।

२१ ये मां प्रभो प्रभो इति वदन्ति ते सर्व्वे स्वर्गराज्यं प्रवेक्ष्यन्तीति नहि
२२ किन्तु यो मम स्वर्गस्थपितुरिष्टक्रियां करोति सएव प्रवेक्ष्यति। तदानीं बहवो मां वदिष्यन्ति हे प्रभो हे प्रभो भवतो नाम्ना वयं भविष्यद्वाचं किं नावोचाम? त्वन्नाम्ना भूतान् किं नात्याजयाम? त्वन्नाम्ना किं नाना-
२३ प्रकाराश्चर्य्यकर्म्माणि नाकुर्म्म? तदानीम् अहं तेभ्यः कथयिष्यामि हे कुकर्म्मकारिणो जना युष्मान् अहं कदापि नैव परिचिनोमि तस्माद् यूयं मत्तो दूरीभवत।

२४ यो मम्एतानि वाक्यानि श्रुत्वा पालयति पाषाणोपरि गृहनिर्म्मातृ-
२५ ज्ञानवता तमुपमामि। यतो वृष्टौ सत्याम् आप्लावन आगते वायौ वहति च सर्व्वेषु तद्गृहे लग्नेषु पाषाणोपरि तस्य भित्तिमूलत्वात् तन्न
२६ पतति। किन्तु यो मम्एतानि वचांसि श्रुत्वा न पालयति सैकते गृहनि-
२७ र्म्मात्रज्ञानिन स उपमास्यते। यतो वृष्टौ सत्याम् आप्लावन आगते वायौ वहति च सर्व्वेषु तद्गृहे लग्नेषु तद् गृहं पतति तत् पतनञ्च महत्तरं भवति।

२८ एतेषु वाक्येषु यीशुना समापितेषु सर्व्वे लोकास्तस्योपदेशम् आश्चर्य्यम्
२९ अमन्यन्त। यस्माद् अध्यापकाइव नहि किन्तु प्रभाववान् इव स तान् समुपादिशत्।

---

८ अष्टमोऽध्यायः।

१ कुष्ठिनः स्वास्थ्यं ५ शतसेनापतेर्दासस्य स्वास्थ्यं १४ पितरस्य श्वश्र्वाः स्वास्थ्यं १६ बहुलोकानां स्वास्थ्यं १८ ख्रीष्टस्यानुगामित्वव्यवस्था २३ झञ्झावारणं २८ भूतत्याजनञ्च।

१ तस्मिन् गिरेरवरोहति बहुलोकास्तत्पश्चादगमन्। एकः कुष्ठी
२ चागत्य तं प्रणम्यावोचत् हे प्रभो यदि भवानिच्छति तर्हि मां
३ शुचिं कर्त्तुं शक्नोति। ततो यीशुः करं प्रसार्य्य तस्याङ्गं स्पृष्ट्वावदत्
४ अहमिच्छामि त्वं शुचि र्भव तत्क्षणात् स कुष्ठात् शुचीकृतः। यीशु-
स्तमवादीत् अवधेहि, एतत् कथमपि मा कथय किन्तु गत्वा स्वं

याजकान् दर्शय स्त्रीयप्रभुद्ध्वतस्य लोकान् प्रमाणयितुं मुसानिरूपितं दानञ्चोत्सृजेथाः।

यीशुना कफर्नाहूम्पुरे प्रविष्टे शतसेनापतिरेक एत्य तं विनीयावादीत् ५ हे प्रभो मम भृत्यः पक्षाघातेन पीडितः शयान आस्ते। योशुस्तमवोचत् ६ अहं गत्वा तं स्वस्थं करिष्यामि। शतसेनापतिः प्रत्यवादीत् हे प्रभो भवतो ७ मद्गृहागमनाय नाहं योग्यपात्रं वाङ्मात्रेणादिशतु तेनैव मद्दासः स्वस्थो- ८ भविष्यति। यतो मयि पराधीनेपि मदाज्ञावश्याः कति कति सेनाः ९ सन्ति तत एकं प्रति याहीत्युक्ते स याति तदन्यं प्रत्यायाहीत्युक्ते स चायाति स्वीयदासं प्रति कर्म्मैतत् कुर्व्वित्युक्ते स तत् करोति। यीशु- १० स्तस्यैतत् वचः श्रुत्वाश्चर्य्यं समन्यत ततः स्वानुगामिलोकान् व्याहरत् युष्मान् सत्यं वच्मि इस्रायेल्लोकानां मध्येऽप्येतादृग्विश्वासं नालभे। पुनरहं युष्मान् ११ वच्मि बहवः पूर्व्वपश्चिमाभ्यामागत्य इब्राहीम् इस्हाक् याकुब्भिः समं स्वर्गराज्य उपवेक्ष्यन्ति किन्तु यत्र क्रन्दनं दन्तघर्षणञ्च जायते तत्र १२ बहिस्तमसि राज्यस्य सन्ताना निक्षेप्स्यन्ते। यीशुस्तं शतसेनापतिमभाषिष्ट १३ तत्र प्रत्ययानुसारतस्तदीयमङ्गलं भूयात् तेनैव तस्मिन् दण्डे तस्य दासो निरामयोऽभवत्।

ततो यीशुः पितरगेह उपस्थाय ज्वरपीडितां शय्यागतां तस्य १४ श्वश्रूमदर्शत्। ततस्तेन तस्याः करे स्पृष्टे तां ज्वरोऽत्याक्षीत् साचोत्थाय १५ तानसेविष्ट।

सन्ध्यायां सत्यां बहुभूतग्रस्तलोकेषु तदन्तिकमानीतेषु तेन कथया १६ भूता अत्याजिषत सर्व्वे पीडिताश्च स्वस्था अकारिषत तस्मात्।

१७ 'अस्माकमपि दौर्ब्बल्यं स्वयं परिधरिष्यति।
अस्माकं सकलान् व्याधीन् स्वयं संमपनेष्यति।'

एतद् यद् वाक्यं यिशायियभविष्यद्वादिना कथितम् आसीत् तत् तदा सफलम् अभवत्।

तदनन्तरं यीशुश्चतुर्दिक्षु लोकान् दृष्ट्वा नदीपारं यातुं शिष्यान् १८

१९ आदिशत् तदाध्यापक एक आगत्य व्याहरत् हे गुरो भवान् यत्र यास्यति
२० तत्राहं भवत्पश्चाद् यास्यामि। ततो यीशुनोक्तं क्रोष्टूनां गर्त्ताः सन्ति
खगानाञ्च नीडानि सन्ति किन्तु मनुजसुनोः शिरस्थापयितुं स्थानं नास्ति।
२१ ततःपरम् अन्य एकशिष्यस्तस्मै कथितवान् हे प्रभो पूर्व्वं मदीयं पितरं
२२ श्मशाने स्थापयितुं मां गन्तुं समादिशतु भवान्। यीशुस्तस्मै कथित-
वान् मृताएव मृतान् जनान् श्मशाने स्थापयन्तु त्वन्तु मम पश्चात्
समागच्छ।

२३ तदनन्तरं तस्मिन् तरणिम् आरूढे सति तस्य शिष्यास्तस्य
२४ पश्चाद् गतवन्तः। ततः परं सागरे महाप्रबलो झञ्झ्‌शानिल उद-
तिष्ठत् ततो महातरङ्गैस्तरणिः समाच्छन्नाऽभवत् किन्तु स निद्रित
२५ आसीत्। अतएव शिष्या आगत्य तदीयनिद्राभङ्गं कृत्वा कथितवन्तः
२६ हे प्रभो वयं म्रियेमहि, अस्माकं प्राणान् रक्षतु भवान्। तदानीं स
तान् अवादीत् हे अल्पविश्वासिनो यूयं किमर्थं बिभीथ? अनन्तरं स
२७ उत्थाय पवनं सरित्पतिञ्च तर्जितवान् तेन निर्व्वातोऽभवत्। अपरञ्च
सर्व्वे लोका आश्चर्य्यं मन्यमानाः परस्परं कथितवन्तः, अहो समीरणः
सरित्पतिश्च किमेतस्य पुरुषस्य निदेशग्राहिणौ भवतः? अयं कीदृशो
मानवः।

२८ तदनन्तरं स पारं गत्वा गिदेरीयप्रदेश उपस्थितवान् ततो भूतग्रस्तौ
द्वौ मानुषौ श्मशानेभ्यो वहिरागत्य तं साक्षात् कृतवन्तौ; तावेतादृशौ प्रच-
२९ ण्डावास्तां यत् तेन स्थानेन कोपि गन्तुं नाशक्नोत्। अपरं तावुच्चैः कथित-
वन्तौ हे ईश्वरस्य पुत्र यीशो त्वया साकम् आवयोः कः सम्बन्धः? निरू-
३० पितसमयात् पूर्व्वं किं त्वमावां यातयितुम् अत्रागतोसि? तदानीं ताभ्यां
३१ किञ्चिद् दूरे महान् शूकरनिवहश्चरति स्म। तेन भूतौ विनीय तस्मै
कथितवन्तौ यद्यावां त्याजयसि तर्हि तस्य शूकरनिवहस्य मध्यम् आवां
३२ प्रेषय। तदानीं यीशुः कथितवान् गच्छतं ततः परं तौ यदा मानुषौ
विहाय शूकरान् आश्रितवन्तौ तदा ते शूकराः प्रपातेन महावेगेन

धावन्तः सरित्पतेरुदके मज्जन्तोऽम्रियन्त। तदनन्तरं शूकररक्षकाः ३३
पलायमानास्तयो र्भूतग्रस्तयो र्यद् अघटत तत्सर्व्ववृत्तान्तं मध्येनगरं
कथितवन्तः। तस्मात् नगरस्थाः सर्व्वे लोका यीशुं साक्षात् कर्त्तुं बहिरा- ३४
गतवन्तः, एवं तं विलोक्य भवान् अस्माकं सीमातः प्रतिष्ठताम् इति
प्रार्थितवन्तः।

---

## ९ नवमोऽध्यायः।

१ पक्षाघातिनः स्वास्थ्यं पापमर्षणञ्च ९ मथीसमाह्वानं १० तस्य गृहे भोज्यं १४ उपवासाकरणकथनं १८ प्रदररोगिणः स्वास्थ्यं २३ अधिपते र्मृतकन्याया जीवनं २७ अन्धद्वयाभ्यां नेत्रदानं ३२ भूतग्रस्तमूकस्य स्वास्थ्यं ३५ दीनेषु यीशोस्तस्य कृपा च।

अनन्तरं यीशु र्नौकामारुह्य पुनः पारं गत्वा निजग्राममागमत्। ततः १
कतिपयलोकाः पक्षाघातिनमेकं स्वट्वायां शाययित्वा तस्य समीपम् आन- २
यन् तेन यीशुस्तेषां विश्वासं विलोक्य तं पक्षाघातिनम् अवादीत् हे वत्स
सुस्थिरो भव तव पापान्यमृज्यन्त। तद्वाक्यं निशम्य कियन्तोऽध्यापका ३
मनःसु चिन्तितवन्त एष ईश्वरं निन्दतीति। स तेषामीदृशीं चिन्तां ४
विज्ञायावदत् कुतो यूयं मनःसु दुश्चिन्तयत? तव पापान्यमृज्यन्त वा त्वमु- ५
त्थाय याहीत्यनयो र्वाक्ययोः किं वक्तुं सुसाध्यं? किन्तु मेदिन्यां पापानि ६
मार्ष्टुं मनुजसूनोः सामर्थ्यमस्ति युष्माकमितिबोधार्थं (स तं पक्षाघातिनम्
अवादीत्) उत्तिष्ठ निजशय्याम् आदाय गृहं गच्छेति। तेन स तदैवोत्थाय ७
निजगृहं गतवान्। तद् दृष्ट्वा सर्व्वे लोका विस्मयं गता एवमीश्वरो ८
मानुषायेदृशं सामर्थ्यम् अदाद् इति हेतोस्तं धन्यमवदन्।

ततःपरं यीशुस्तत्स्थानाद् गच्छन् गच्छन् करसञ्चयगृहोपविष्टं ९
मथीनामानं जनं निरीक्ष्य तमवोचत्, मामनु त्वमागच्छ ततः स उत्थाय
तमन्वव्रजत्।

पश्चाद् यीशौ गृहमध्ये भोजनायोपविष्टे सति बहवः करसंग्राहिणः १०
पापिनश्च लोका आगत्य तेन तच्छिष्यैश्च सार्द्धम् उपाविशन्। फिरूशि- ११

लोकास्तदालोक्य तच्छिष्यान् बभाषिरे युष्माकं गुरुः किमर्थं करसंग्रा-
१२ हिभिः पापिभिश्च सार्द्धम् अश्नाति? यीशुस्तच्छ्रुत्वा तान् प्रत्यवाच
१३ निरामयानां चिकित्सकेन प्रयोजनं नास्ति किन्तु सामयानाम्। अतो यूयं
यात्वास्य वाक्यस्यार्थं शिक्षध्वं।

'दयायां मे यथा प्रीति र्न तथा यज्ञकर्म्मणि।'

यतो धार्म्मिकान् आह्वातुम् अहं नागमं किन्तु मनः परावर्त्तनार्थं
पापिन आह्वातुम् आगमम्।

१४ ततःपरं योहनः शिष्यास्तमुपागत्य व्याहरन् फिरूशिलोका वयञ्च
बहुवारम् उपवसामः किन्तु भवतः शिष्याः कुतो नोपवसन्ति? तदा
१५ यीशुस्तान् प्रत्यवदत् सखिभिः साकं यावत् कन्याया वरस्तिष्ठति तावत् ते
किं विलपन्ति? किन्तु तेषामन्तिकाद् वरनयनकालो यदागमिष्यति
१६ तदा त उपवत्स्यन्ति। अपरं पुरातनवसनेन नूतनवसनं कोपि न संयोज-
यति यतो योजितेन पुरातनं छिद्यते तच्छिन्नञ्च ततोपि कुदृश्यं भवति।
१७ एवं पुरातनकुत्वां नवीनद्राक्षारसं कोपि न निधत्ते यतस्तथाकृते कुत्व-
र्विदीर्य्यते द्राक्षारसश्च च्यवते कुत्वू र्नश्यत्यपि तस्मान् नवीनकुत्वां नवीन-
द्राक्षारसं निधत्ते तेनोभयोरवनं भवति।

१८ तस्यैतत्कथाकथनकाले कश्चिदधिपतिस्तं प्रणम्यावदत मदीया कन्या
प्रायेणेदानीं मृता तस्माद् भवानागत्य तत्काये करमर्पयतु तेनैव सा
१९ जीविष्यति। ततो यीशुरुत्थाय शिष्यैः साकं तत्पश्चाद् गतवान्। एतर्हि
२० द्वादशवर्षाणि प्रदरामयेन शीर्णा काचिद् योषित् तमुपागत्य तदीय-
२१ वसनग्रन्थिम् अस्पृशत्। यतस्तस्य वसनमात्रे मया स्पृष्टेऽहं रोगात् मोक्ष्ये
२२ सा योषिद् इत्यचिन्तयत्। ततो यीशुरास्यं परावर्त्त्य तां विलोक्य
व्याहरत् कन्ये सुस्थिरा भव तव विश्वासस्त्वां निरामयामकरोत् इत्युक्ते
तद्दण्डात् सा निरामयाभूत्।

२३ अपरञ्च यीशुस्तदधिपते र्गेहं गत्वा बहून् वादकादिजनान् कोला-
२४ हलकृतो विलोक्य तानवदत् पन्थानं त्यजत सा न मृता निद्रिताऽस्ते

इति श्रुत्वा ते तमुपाहसन्। किन्तु सर्व्वेषु बहि र्भूतेषु तेनाभ्यन्तरं प्रविश्य २५
कन्यायाः करे धृते सोदतिष्ठत्। तेन तत्कर्म्मणो वार्त्ता कृत्स्नं देशं व्याप्नोत्। २६

ततो यीशौ तत्स्थानाद् गते हे दायूदः सन्तानास्मान् दयस्वेत्युक्त्वा २७
द्वावन्धौ प्रोच्चैराह्वयन्तौ तत्पश्चाद् गतौ। तदा यीशुना गेहमध्ये प्रविष्टे २८
तावपि तदन्तिक उपास्थातां ततः स तावपृच्छत् कर्म्मैतत् कर्त्तुं मम सा-
मर्थ्यमस्तीति युवां किं प्रतीथः? तौ प्रत्यवोचतां सत्यं प्रभो। तदा स २९
तयो र्नेत्रे स्पृष्ट्वावदत् युवयोः प्रत्ययानुरूपं शुभं भूयात्। तेनैव तत्क्षणात् ३०
तयो र्नेत्राणि निर्म्मलानि जातानि। ततो यीशुस्तौ गाढमादिशन् इत्य- ३१
वोचत्, अवधत्त कार्य्यमिदं कमपि मा ज्ञापयतं, किन्तु तौ गत्वा कृत्स्ने
तद्देशे तत्कीर्त्तिं प्राकाशयतां।

अपरं तयो र्बहि र्गतयोः सतो र्लोका भूतग्रस्तमूकमेकं तदन्तिकम् ३२
आनयन्। तेन भूते त्याजिते स मूकः कथामकथयत् ततः सर्व्वे लोका ३३
विस्मयं प्राप्यावदन् इस्रायेल्वंशे कदापीदृशं नादर्शि किन्तु फिरूशि- ३४
लोका व्याहरन् भूताधिपेन स भूतान् त्याजयति।

ततःपरं यीशुस्तेषां भजनभवनेषूपदिशन्नुपदिशन् राज्यस्य सुसंवादं ३५
प्रचारयन् प्रचारयन् लोकानां यस्य यो रोगो या च पीडासीत् तांश्च
नाशयन् सर्व्वनगरग्रामेषु पर्य्यभ्रमत्। एवं सर्व्वलोकान् अतीवक्लान्तानरक्षि- ३६
तान् मेषानिव त्यक्तान् दृष्ट्वा तेषु करुणां कृत्वा शिष्यानभाषत शस्यानि ३७
बहूनि सन्ति किन्तु छेदका अल्पे। अपरछेदकान् क्षेत्रं प्रेषयितुं शस्या- ३८
धिपं प्रार्थयध्वम्।

---

१० दशमोऽध्यायः।

१ द्वादशशिष्याणां प्रेषणं १६ तेषां दुःखज्ञापनं २४ खीष्टोपदेशफलं ४० शिष्यान् प्रति उपकारफलानि च।

ततःपरं यं पितरं वदन्ति स शिमोन् तद्भ्रातान्द्रियः सिवदिपुत्त्रो १
याकुब तद्भ्राता योहन फिलिप् बर्थलमी थोमाः करसंग्राहिमथी २
आल्फीयपुत्त्रो याकुब् लिब्बीयो यं थद्दीयं वदन्ति किनानीयशिमोन्

३ खीष्टं यः परकरेषु समर्पयिष्यति स ईष्करियोतीययिहूदाश्च एतान्
४ द्वादशशिष्यान् आहूय यीशुरपवित्रभूतान् त्याजयितुं सर्व्वरोगव्याधीन्
५ नाशयितुञ्च तेभ्यः सामर्थ्यमदात्। ततः प्रेषणकाले तान् द्वादशजनान्
६ इत्याज्ञापयत् भिन्नदेशीयलोकानां मार्गं शोमिरोणीयानां किमपि
७ पुरञ्च न प्रविश्य इस्रायेल्गोत्राणां ये हारितमेषास्तानुपागच्छत। एवं
८ गच्छन्तः स्वर्गस्य राजत्वं समीपागतम् इमां कथां प्रचारयन्तो ब्रूत। अपरं
रोगिणो नीरोगान् कुरुत कुष्ठिनः शुचीन् कुरुत मृतलोकान् जीवयत
भूतान् त्याजयत च, अपरं विना मूल्यं यूयं प्राप्नुथ विना मूल्यमेव वितरत।
९ किन्तु स्वस्वकटिबन्धे स्वर्णं वा रूप्यं वा ताम्रं वा किमपि न गृह्लीत। एवं
१० यात्रार्थं पुटिकां द्वितीयवस्त्रं पादुके दण्डश्च न गृह्लीत यतः कर्म्मकरो
११ भरणमर्हति। अपरं यूयं यन्नगरं ग्रामं वा प्रविशथ तत्र यं जनं योग्यपात्रं
१२ वित्थ स्थानान्तरगमनपर्य्यन्तं तस्य निकटे तिष्ठत। पुन र्यदा यूयं यस्य
१३ निवेशनं प्रविशथ तदा तमाशिषं ब्रूत। तत्र स यदि योग्यो भवति तर्हि
तत् कल्याणं तम्प्रति फलिष्यति नो चेत् साशी युष्मान् प्रत्यागमिष्यति।
१४ किन्तु ये जना युष्माकमातिथ्यं न कुर्व्वन्ति युष्माकं कथाञ्च न शृण्वन्ति
१५ तेषां गृहेभ्यो नगराद्वा प्रस्थानकाले स्वेषां पदधूलीः पातयत। अहं
युष्मान् सत्यं वदामि विचारकाले तस्य नगरस्य दशातः सिदोमअमोरा-
नगरयो र्दशा सह्यतरा भविष्यति।

१६ अपरं पश्यत वृकसमूहमध्ये मेषानिव युष्मानहं प्रेषयामि, अतएव
१७ सर्पाइव सतर्काः कपोताइव हिंसारहिता भवत। एवं मानुषेभ्यः सावधाना
भवत यतस्ते युष्मान् राजसभायां समर्पयिष्यन्ति तेषां भजनभवनेषु प्रह-
१८ रिष्यन्ति च। अपरं मम नामहेतोः शासकानां राज्ञाञ्च सम्मुखं तान् अन्य-
१९ देशीयांश्च प्रति साक्ष्यं दातुं युष्मान् आनेष्यन्ति। किन्तु तद्दत् समर्पिताः सन्तो
यूयं कथं केन वाक्येन वा प्रतिवक्ष्यथ तत् न चिन्तयत यस्मात् तदानीं
युष्माभि र्यद् वक्तव्यं तत् तस्मिन्नेव दण्डे युष्माकं मनःसु समुपस्थास्यति।
२० यतस्तदानीं यो वदिष्यति स यूयं नहि किन्तु युष्माकं मध्यवर्त्ती पितुरात्मा।

अन्यच्च भ्राता भ्रातरं पिता च पुत्रं मृत्यौ समर्पयिष्यति, एवं सन्तानाः २१
स्वस्वमातापितृणां विरुद्धम् उत्तिष्ठन्तस्तान् घातयिष्यन्ति। तथा २२
मम नामहेतोः सर्व्वे लोका युष्मान् ऋतीयिष्यन्ते किन्तु यो जनः शेषं
यावत् धैर्य्यं धृत्वा स्थास्यति स परित्रायिष्यते। अपरं ते यदा युष्मान् एक- २३
स्मिन् पुरे ताडयिष्यन्ति तदा यूयम् अन्यपुरं प्रति पलायध्वम् अहं युष्मभ्यं
सत्यं कथयामि यावत् मनुष्यपुत्रो नागमिष्यति तावत् इस्रायेल्देशीय-
सर्व्वनगरभ्रमणं समापयितुं न शक्ष्यथ। गुरोः शिष्यो न श्रेष्ठः प्रभो र्दासश्च २४
न श्रेष्ठः शिष्ये स्वगुरोः समे, दासे च स्वप्रभोः समे सति यथेष्टम्। ते यदि २५
गृहाधिपतिं भूतराजमवदन् तर्हि परिजनानपि तथैव किं न वक्ष्यन्ति?
किन्तु तस्माद् यूयं न बिभीत यन्न प्रकाशयिष्यते तादृशम् आच्छादितं २६
किमपि नास्ति, एवं यन्न व्यक्तीभविष्यति तादृशं गुप्तं किमपि नास्ति।
यदहं युष्मभ्यम् अन्धकारे कथयामि तद् यूयं दीप्तौ कथयत, एवं श्रवणा २७
भ्यां यत् शृणुथ तद् गृहोपरि प्रचारयत। अपरं ये विग्रहं हन्तुं शक्नुवन्ति २८
नात्मानं हन्तुं शक्नुवन्ति तेभ्यो मा बिभीत किन्तु विग्रहमात्मानञ्च द्वयमपि
नरके यो विनाशयितुं शक्नोति तस्मादेव बिभीत। अन्यच्च द्वौ चटकपक्षिणौ २९
ताम्रमुद्रैकया किं न विक्रीयेते तथापि युष्माकं पितुरनुमतिं विना
तयोरेकोपि भूमौ न पतति। एवं युष्माकं शिरसां सर्व्वे कचा गणिताः ३०
सन्ति। अतो मा बिभीत यूयं बहुचटकपक्षिभ्यो महार्घाः। अपरं यः कश्चिन् ३१
मानुषाणां साक्षान् मां स्वीकरोति स्वीयस्वर्गस्थपितुः समक्षम् अहं तं ३२
स्वीकरिष्यामि; किन्तु यः कश्चिन् मानुषाणां समक्षं माम् अपह्नुते स्वीय- ३३
स्वर्गस्थपितुः साक्षाद् अहमपि तम् अपह्नोष्ये।

अहं धरण्यां शान्तिं दातुम् आगमम् इति मानुभूयतां शान्तिं ३४
दातुं नहि किन्त्वसिं दातुम् आगमम्। तथा पित्रा साकं पुत्रस्य मात्रा ३५
साकं कन्यायाः श्वश्र्वा च साकं पुत्रवध्वा विरोधं जनयितुम् आगतोऽहम्।
तस्मात् स्वस्वपरिजना एव मानुषाणां रिपवो भविष्यन्ति। यः कश्चित् ३६
मातरि पितरि वा मत्तोऽधिकं प्रीयते स मद्योग्यो नहि तथा यः कश्चित् ३७

३८ स्वपुत्रे वा स्वपुत्र्यां मत्तोऽधिकं स्नेहं करोति स च मद्योग्यो नहि। अपरं यः कश्चित् स्वक्रुशं गृहीत्वा मदनुगामी न भवति सोऽपि मद्योग्यो नहि।
३९ एवं यः कश्चित् स्वप्राणान् अवति स प्राणान् हारयिष्यति किन्तु यः कश्चिन् मत्कृते स्वप्राणान् हारयति स तान् अविष्यति।

४० अपरञ्च यः कश्चिद् युष्माकम् आतिथ्यं करोति स ममातिथ्यं करोति
४१ यश्च ममातिथ्यं करोति स मत्प्रेषकस्यातिथ्यं करोति। एवं यः कश्चिद् भविष्यद्वक्तेति ज्ञात्वा भविष्यद्वक्तुरातिथ्यं करोति स भविष्यद्वक्तुः फलं लप्स्यते तथा यो धार्म्मिक इति ज्ञात्वा धार्म्मिकस्यातिथ्यं करोति स
४२ धार्म्मिकलोकस्य फलं लप्स्यते। अपरं य एतेषां क्षुद्रलोकानां कस्मैचित् जनाय मच्छिष्यबुद्ध्या कंसैकेन शीतलजलं ददाति युष्मानहं सत्यं वदामि स केनापि प्रकारेण फलेन न वञ्चिष्यते।

---

११ एकादशोऽध्यायः।

१ सुसंवादं प्रचारयितुं ख्रीष्टस्य यात्रा २ ख्रीष्टं प्रति योहनः शिष्याणां प्रेषणं ७ योहनमधि ख्रीष्टस्य साक्ष्यं १६ योहन् ख्रीष्टमधि लोकानां वितर्कः २० कोरासीन् प्रभृति नगराणि प्रति ख्रीष्टस्य विलापः २५ पितृपरमेश्वराय ख्रीष्टस्य धन्यवादः २८ भाराक्रान्तलोकानाम् आह्वानञ्च।

१ इत्थं यीशुः स्वद्वादशशिष्याणाम् आज्ञापनं समाप्य पुरे पुरे समुपदेष्टुं सुसंवादं प्रचारयितुञ्च तस्मात् स्थानात् प्रतस्थे।

२ ततो योहन् कारायां तिष्ठन् ख्रीष्टस्य कर्म्मणां वार्त्तां प्राप्य यस्या-
३ गमनस्योक्तिरासीत् स एव किं त्वम्? किं वयमन्यम् अपेक्षिष्यामहे? कथाम्
४ एतां प्रष्टुं द्वौ स्वशिष्यौ प्रेषितवान्। यीशुः प्रत्यवोचत् यद्यद् युवां शृणुथः
५ पश्यथश्च तद्वार्त्तां योहनं वदतं, अन्धाः पश्यन्ति खञ्जा गच्छन्ति कुष्ठिनः
६ शुद्धा भवन्ति बधिराः शृण्वन्ति मृताश्च जीवन्त उत्तिष्ठन्ति दरिद्राणां समीपे सुसंवादः प्रचार्य्यते यस्याहं विघ्नो न भवामि स एव धन्य इति।

७ अनन्तरं तयोः प्रस्थितयोः सतो र्यीशु र्योहनमधि लोकान् व्याहरत् यूयं किं द्रष्टुं मध्येप्रान्तरं गतवन्तः? किं वायुना कम्पितं नलं? वा किं द्रष्टुं बहिर्-
८ गमत? किं परिहितसूक्ष्मवस्त्रं मनुजमेकं? पश्यत ये सूक्ष्मवसनं परिदधति ते

राजधान्यां तिष्ठन्ति। तर्हि यूयं किं द्रष्टुं बहिरगमत ? किमेकं भविष्यद्वा- ९
दिनं? तदेव सत्यम् अहं युष्मान् वदामि स भविष्यद्वादिनोपि महान् यतः १०

'पश्य स्वकीयदूतन्तु तवाग्रे प्रेषयाम्यहम्।
गत्वा त्वदीयं पन्थानं स हि परिष्करिष्यति।'

यमधि वाक्यमेतल्लिखितमास्ते सएवायं योहन्। पुनरहं युष्मान् सत्यं ११
वदामि स्त्रीतो योहन्मज्जकात् श्रेष्ठः कोपि नाजायत तथापि स्वर्गराज्य-
मध्ये सर्व्वस्मात् क्षुद्रो यः स योहनः श्रेष्ठो भवति। अपरं योहनो विद्य- १२
मानकालाद् इदानीं यावत् स्वर्गराज्यं बलाद् आक्रम्यते आक्रमितारश्च
बलेन तद् अधिकुर्व्वन्ति। यतो योहनं यावत् सर्व्वभविष्यद्वादिभि र्व्यव- १३
स्थया चोपदेशः प्राकाश्यत। अपरं यदि यूयम् इति कथां ग्रहीतुं शक्नुथ १४
तर्हि समीचीनं यदेलीयस्यागमनवार्त्ता विद्यते सएवायम्। यस्य श्रवणे १५
विद्येते स शृणुयात्।

केनाहम् एतान् विद्यमानजनान् उपमास्यामि ह्रट्ट उपविश्यन्तो ये १६
बालकाः स्वबन्धून् आहूय वदन्ति वयं युष्माकं समीपे वेणुम् अवादयाम
किन्तु यूयं न नृत्यत तथा युष्माकं समीपेऽरोदाम किन्तु यूयं न व्यलपत १७
तादृशै र्बालकैस्तदुपमा भविष्यति। यतो योहन् आगत्य न भुक्तवान् न १८
पीतवांश्च तेन लोका वदन्ति स भूतग्रस्त इति। एवं मनुजपुत्त्र आगत्य १९
भुक्तवान् पीतवांश्च तेन लोका वदन्ति पश्यत अयमेको भोक्ता सुरापो
चण्डालानां पापिनाञ्च बन्धुरिति किन्तु ज्ञानिनो ज्ञानं निर्दोषं विदन्ति।

अपरञ्च स येषु नगरेषु कर्म्माश्चर्य्याण्यकरोत् तन्निवासिभि र्मनःसु २०
अपरावर्त्तितेषु तानि पुराणि हा इत्युक्त्वा कथयितुमारभत। हा कोरा- २१
सीन् हा बैत्सैदां युष्माकं मध्ये यान्याश्चर्य्यकर्म्माण्यक्रियन्त तानि यदि
सोरसीदोनोरकारिष्यन्त तर्हि प्रागेव तन्निवासिभिः शाणवसनभस्मनोरुप-
विश्य मनांसि पर्य्यवर्त्तिष्यन्त। एतस्माद् अहं युष्मान् वदामि विचारकाले २२
युष्माकं दशातः सोरसीदोनो र्दशा सह्यतरा भविष्यति। एवं हा कफर्ना- २३
हूम् त्वं स्वर्गं यावदुन्नतोसि किन्तु नरके निक्षेप्स्यसे यतस्त्वयि यदाश्चर्य्याणि

कर्म्माण्यकारिषत तानि यदि सिदोमि नगरेऽकारिष्यन्त तर्हि तदद्य
२४ यावद् अस्थास्यत्। किन्तु युष्मान् अहं वदामि विचारकाले तव दण्डातः
सिदोमो दशा सह्यतरा भविष्यति।

२५ तदानीं यीशुः पुनरकथयत् हे स्वर्गमेद्योरेकाधिपते तात त्वं ज्ञानवत्सु
विद्वत्सु च लोकेषु नैतानि प्रकाश्य बालकेषु प्राकाशयः, तस्मात् त्वां धन्यं
२६ वदामि; हे पितरित्थं भवतु यत इदमेव त्वयोत्तमं दृश्यते। पिता मयि
२७ सर्व्वाणि समार्पयत् तथा पितरं विना कोपि पुत्रं न वेत्ति, एवं पुत्रो
यस्मिन् जने च स तं प्रकाशयति इत्युभयं विना कोपि पितरं न वेत्ति।
२८ हे परिश्रान्ता भाराक्रान्ताश्च लोका यूयं मामुपागच्छत युष्मानहं
२९ विश्रमयिष्यामि। अहं क्षान्तिशीलो नम्रमनाश्च तस्मात् मम युगं यूयं
३० वहत मत्तः शिक्षध्वञ्च तेन यूयं स्वस्वमनःसु विश्रामं लप्स्यध्वे। यतो मम
युगं निरायासं मम भारश्च लघुः।

---

१२ द्वादशोऽध्यायः।

१ विश्रामवारे खीष्टोपदेशः ९ शुष्ककरस्वास्थ्यं १४ खीष्टमधि फिरूशिनां कुमन्त्रणं भविष्यद्वाक्यसिद्धिश्च २२ भूतग्रस्तान्धमूकानां स्वास्थ्यं ३१ कथाकथनोपदेशः ३८ यूनस्दाक्षिणात्यराज्ञीभ्यां चिह्नान्वेषिणां भर्त्सनं ४३ अशुचिभूतग्रस्तानां कथनं ४६ मातृभ्रातृषूपदेशश्च।

१ तदानीं यीशु र्विश्रामदिने शस्यक्षेत्रेणागमत् तत्र तस्य शिष्याः क्षुधिताः
२ सन्तः शस्यमञ्जरीः छित्वा भोक्तुमारभन्त। तद् दृष्ट्वा फिरूशिनो यीशुम्
३ अवदन् पश्य विश्रामवारे यत् कर्म्माकर्त्तव्यं तदेव तव शिष्याः कुर्व्वन्ति। स
तान् अवादीत् दायूद् तस्य सङ्गिनश्च क्षुधिताः सन्तो यत् कर्म्माकरोत् तत्
४ किं यूयं नापाठिष्ट? स कथम् ईश्वरावासं प्रविश्य ये दर्शनीया पूपा याजकान्
५ विना तस्य तत्सङ्गिनाञ्चाभोक्तव्या आसन् तानेव बुभुजिरे। अपरञ्च याजका
विश्रामवारे मध्येमन्दिरं विश्रामवासरीयनियमम् उल्लङ्घ्यापि निर्दोषा
६ भवन्ति शास्त्रान्तर्गतम् इदमपि किं युष्माभि र्नापाठि? अन्यच्च युष्मानहं
७ वादरामि मन्दिरादपि गुरुतर एकोत्र विद्यते। किन्त्वहं दयां काङ्क्षामि
दयामेवेच्छामि यदि यूयमेतद्वचनस्यार्थम् अज्ञास्यत तर्हि निर्दोषान्

दोषिणो नाकरिष्यत ; तथा मनुष्यपुत्रो विश्रामवारस्याप्यधिपतिरास्ते। ८

अनन्तरं तस्मात् स्थानात् प्रस्थाय तस्मिन् तेषां भजनभवनं प्रविष्टे ९ शुष्ककररोगवान् एक उपातिष्ठत्। ततो यीशुम् अपवदितुं लोका अप्राक्षुः १० स्मार्थ्यं किं विश्रामवारे कर्त्तव्यं? तेन स प्रत्यवोचत् विश्रामवारे कश्चिन् ११ मेषो यदि गर्त्ते पतति तर्हि तं धृत्वा यो नोत्तोलयति तादृशो जनो युष्माकं मध्ये कोऽस्ति? मेषान्मनुष्यः किं श्रेष्ठो नहि? तस्माद् विश्रामवारे १२ सत्कर्म्म कर्त्तव्यमेव। पश्चात् स तं मानुषम् अभाषत हस्तं विस्तृणु ततस्तेन १३ हस्ते विस्तृते सति सोऽन्यकरवत् स्वस्थोऽभूत्।

तदानीं फिरूशिनो बहिर्गत्वा कथं तं हनिष्यन्तीति तद्विरुद्धं कुम- १४ न्त्रणां कर्त्तुमारभन्त। ततो यीशुस्तद् विदित्वा स्थानान्तरम् अगमत्; १५ एवं बहुषु लोकेषु तत्पश्चाद् गतेषु स तान् निरामयान् कृत्वेत्याज्ञापयत् १६ यूयं मां मा परिचाययत। तेन

१७ 'पश्य स मे मनोनीतः सेवकश्च प्रियश्च मे।
तस्मिंस्तुष्यति मे चित्तमात्मा च स्थापयिष्यते।
सोऽन्यदेशीयलोकेषु विधिं प्रकाशयिष्यति।
१८ केनापि न विरोधं स विवादञ्च करिष्यति।
पथिमध्ये रवन्तस्य श्रोतुं कोपि न प्राप्स्यति।
१९ यावत्कालं पृथिव्यां स व्यवस्थां न प्रकाशयेत्।
तावत्कालं नलस्यापि दलितं नैव भंक्ष्यति।
एवं सधूमवर्त्तिञ्च न स निर्व्वापयिष्यति।
२० प्रत्याशाञ्च करिष्यन्ति तन्नाम्नि भिन्नदेशजाः।'

एतानि यानि वाक्यानि यिशायियभविष्यद्वादिना प्रोक्तान्यासन् तानि २१ सफलानि जातानि।

ततःपरं लोका भूतग्रस्तमेकमन्धमूकमानुषं तत्समीपम् आनयन् तदा २२ स तं निरामयम् अकरोत् ततः सोऽन्धो मूको द्रष्टुं कथितुञ्चारब्धवान्। तेन २३ सर्व्वे विस्मिताः कथितवन्त एष किं दायूदः सन्तानो नहि? किन्तु फिरू- २४

शिनस्तन्निशम्य व्याहरन् बाल्सिबूब्नामानं भूतानां राजानं विना नैव
२५ भूतान् त्याजयति। तदा यीशुस्तेषाम् ईदृशं मनोगतं विज्ञाय तान्
अवदत् किमपि राज्यं यदि स्वविपक्षतया पृथग् भवति तर्हि तद् उच्छिन्नं
भवति; तथा यत् पुरं गृहं वा स्वविपक्षतया विभिन्नं भवति तदपि
२६ स्थातुं न शक्नोति। तद्वत् शैतान् यदि शैतानं वहिष्कृत्य स्वविपक्षतया
२७ पृथग् भवति तर्हि तस्य राज्यं कथं स्थास्यति? अपरं यद्यहं बाल्सिबूब्द्वारा
भूतान् त्याजयामि तर्हि युष्माकं सन्तानाः केन भूतान् त्याजयन्ति? तस्माद्
२८ युष्माकम् एतस्य विचारयितारस्त एव भविष्यन्ति। किन्तु यद्यहम् ईश्वर-
२९ स्यात्मना भूतान् त्याजयेयं तर्हीश्वरस्य राजत्वं युष्मान् उपागमत्। अपरं
कोपि प्रबलं जनं प्रथमं न बद्ध्वा कथं तद्भवनं प्रविश्य द्रव्यादि लुण्ठितुं
३० शक्नोति? किन्तु तत् कृत्वा तद्गेहस्थितानि द्रव्याणि लुण्ठितुं शक्नोति। यः
कश्चिन् मत्पक्षो न भवति स विपक्ष आस्ते तथा यो मया सार्कं न संगृह्णाति
स विकिरति।

३१ अतो युष्मान् अहं व्याहरामि मानुषाणां सर्व्वप्रकारपापानां निन्दा-
नाञ्च क्षमा भवितुं शक्नोति किन्तु पवित्रस्यात्मनो विरुद्धं निन्दायाः क्षमा
३२ भवितुं न शक्नोति। अपरं यः कश्चिन् मानुषपुत्रस्य विरुद्धं कथां कथयति
तदपराधस्य क्षमा भवितुं शक्नोति किन्तु यः कश्चित् पवित्रस्यात्मनो विरुद्धं
३३ कथां कथयति, इह प्रेत्य वा तदपराधस्य क्षमा भवितुं न शक्नोति। यदि
पादपं भद्रं वदसि तर्हि तस्य फलमपि भद्रं वक्तव्यं; एवं पादपो न भद्र-
इत्युक्ते तत्फलमपि न भद्रमिति वक्तव्यं यतः स्वस्वफलेन पादपः परि-
३४ चीयते। अन्यच्च सर्पवंशा यूयम् अभद्राः सन्तः कथं भद्रवाक्यानि वक्तुं शक्ष्यथ?
३५ यस्मादन्तःकरणस्य पूर्णभावानुसारतो वदनाद्वाक्यं निर्गच्छति। तस्मा
भद्रमनुजोऽन्तःकरणभाण्डागाराद् उत्तमद्रव्याणि वहिष्करोति, एवम्
३६ अभद्रमनुजोऽभद्रभाण्डागाराद् अभद्रद्रव्याणि वहिष्करोति। किन्त्वहं
युष्मान् वच्मि मानुषा यावन्त्यालस्यवचांसि वदन्ति विचारकाले तेषां
३७ प्रत्युत्तरं दातव्यं यतस्त्वं स्ववाक्येन निर्दोषः सदोषो वा गणिष्यसे।

तदा कियन्तोऽध्यापका फिरूशिनश्च प्रत्यवोचन् हे गुरो वयं भवतः ३८
किमपि चिह्नं द्रष्टुमिच्छामः। ततः स प्रत्यवादीत् दुष्टो व्यभिचारी च ३९
वंशो चिह्नं चेष्टते किन्तु यूनसभविष्यद्वक्तुश्चिह्नं विना तं प्रति किमपि
चिह्नं न दायिष्यते। यतो यूनस् यथा त्र्यहोरात्रं वृहन्मीनोदरे आसीत् ४०
तथा मनुजपुत्रोपि त्र्यहोरात्रं महीमध्ये स्थास्यति। अपरं नीनिवीयलोका ४१
विचारकाल एतद्वंशीयानां प्रातिकूल्येनोत्थाय तान् दोषिणः करिष्यन्ति
यतस्ते यूनस उपदेशान् मनांसि पर्य्यवर्त्तयन् किन्तु यूनसोपि गुरुतर
एकोत्र विद्यते। एवं दक्षिणदेशीया राज्ञी च विचारकाल एतद्वंशीयानां ४२
विरुद्धम् उत्थाय तान् दोषिणः करिष्यति यतः सा राज्ञी सुलेमानो
विद्यायाः कथां श्रोतुं धरणीसीमात आगच्छत् किन्तु सुलेमानतोपि
गुरुतर एकोत्र विद्यते।

अपवित्रभूतो मानुषान्निर्गत्य शुष्कस्थानेन गत्वा विश्राममन्विच्छति ४३
किन्तु तमप्राप्य स वक्ति यस्माद् गृहादागतोस्मि तद्गृहं प्रति गच्छानि।
ततस्तत्रोपस्थाय तत् शून्यं मार्ज्जितं शोभितञ्च वीक्षते। तदा पुनर्गत्वा ४४
स्वतोपि दुष्टतरान् अन्यसप्तभूतान् सङ्गिनः कृत्वा तद्गृहं प्रविश्य तैः सह ४५
वसति तेन तन्मानुषस्य पूर्व्वदशातः शेषदशातीवाभद्रा जायते; एतद्
दुष्टवंशं प्रत्यपि तथैव घटिष्यते।

लोकेभ्य एतत्कथाकथनकाले तस्य माता भ्रातरश्च तेन साकं काञ्चित् ४६
कथां कथयितुमिच्छन्तो वहिरतिष्ठन्। ततः कश्चित् तमवदत् पश्य तव ४७
माता भ्रातरश्च त्वया साकं काञ्चित् कथां कथयितुमिच्छन्तो वहि-
स्तिष्ठन्ति। किन्तु स तं प्रत्यवोचत् मम माता का? भ्रातरो वा के? पश्चात् ४८
शिष्यान् प्रति हस्तमुत्थाप्य गदितवान् पश्यैते मम माता भ्रातरश्च ४९
यतो यो मम स्वर्गस्थपितुरिष्टं कर्म्म करोति सएव मम भ्राता भगिनी ५०
जननी च।

## १३ त्रयोदशोऽध्यायः।

१ बीजवपनदृष्टान्तः १० शिष्यैः साकं कथनं १८ शिष्याणां दृष्टान्तार्थज्ञापनं २४ वन्ययासदृष्टान्तः ३१ सर्षपदृष्टान्तः ३३ किण्वदृष्टान्तः ३४ ख्रीष्टमधि भविष्यद्वाक्यसिद्धिः ३६ पूर्व्वोक्तदृष्टान्तस्य व्याख्यानं ४४ गुप्तधनस्य दृष्टान्तः ४५ मुक्तादृष्टान्तः ४७ आनायनिक्षेपदृष्टान्तः ५१ शिष्यान् प्रति कथनं ५३ स्वदेशीयलोकैः ख्रीष्टस्यासम्मानञ्च।

१ अपरं तस्मिन् दिने यीशु र्गेहादित्वा जलधिरोधस्युपाविशत्। तत्र
२ तत्सन्निधौ बहुतरजनोपस्थितत्वात् स नावमारुह्योपविष्टवान् तेन लोका-
३ स्तटे दण्डायमाना अतिष्ठन्। तदा स दृष्टान्तैस्तेभ्य इत्थं बहूपदेशान्
४ अकथयत्। पश्यत कश्चित् कृषीबलो बीजं वप्तुं बहिर्गतवान् तस्य बीजानि
वपतः कियन्ति बीजानि मार्गपार्श्वे पतितानि पक्षिणस्त्तानि भक्षित-
५ वन्तः। अपरं कियन्ति बीजानि स्वल्पमृन्मिश्रितपाषाणेषु पतितानि
मृदल्पत्वाच्च क्षिप्रमङ्कुरितानि किन्तु भास्कर उदिते तानि दग्धानि
६ तन्मूलासंलग्नत्वाद् अशुष्यंश्च। एवं कियन्ति कण्टकिवनमध्ये पतितानि
७ कण्टकै र्वृद्धा तानि ग्रस्तानि। तथा कियन्ति बीजानि उर्व्वरभुवि
८ पतितानि तेषां कियन्ति शतगुणानि कियन्ति त्रिंशद्गुणानि फलान्य-
९ फलन्। श्रोतुं यस्य श्रवसी आसाते स शृणुयात्।

१० ततःपरं शिष्या आगत्य तमप्राक्षुः कुतो भवान् तेभ्यो दृष्टान्तकथाः
११ कथयति ? ततः स प्रत्यवदत् स्वर्गराज्यस्य गूढार्थं वेदितुं युष्मभ्यं शक्तिर-
१२ दायि किन्तु तेभ्यो नादायि। यतो यस्य सन्निधौ वर्द्धते तस्मा एव
दायिष्यते तेन तस्य पुन र्बाहुल्यं भविष्यति किन्तु यस्यान्तिके न वर्द्धते
१३ तस्य यत् किञ्चिद् अस्ति तदपि तस्मान्नायिष्यते। ते दृष्ट्वापि न पश्यन्ति
श्रुत्वापि न शृण्वन्ति न बुध्यन्ते च तस्मात् तेभ्यो दृष्टान्तकथाः कथयामि।
यथा

१४ "कर्णैः श्रोष्यथ यूयं हि किन्तु यूयं न भोत्स्यथ।
नेत्रै र्द्रक्ष्यथ यूयञ्च ज्ञातुं यूयं न शक्ष्यथ।
ते मानुषा यथा नैव परिपश्यन्ति लोचनैः।
कर्णै र्यथा न शृण्वन्ति न बुध्यन्ते च मानसैः।

व्यावर्त्तयन्तु चित्तानि समये तेषु कुत्रचित्।
मत्तस्ते मनुजाः स्वस्था यथा नैव भवन्ति च।
१५ तथा तेषां मनुष्याणां क्रियन्ते स्थूलबुद्धयः।
बधिरीभूतकर्णाश्च जाताश्च मुद्रिता दृशः।

एतानि वचनानि यिशायियभविष्यद्वादिनोक्तानि तेषु सफलानि जातानि। किन्तु धन्यानि युष्माकं नेत्राणि यतस्तानि पश्यन्ति धन्यानि १६ च युष्माकं श्रोत्राणि यतस्तानि शृण्वन्ति। अहं युष्मान् सत्यं वदामि १७ यूयं यद्यत् पश्यथ तद् बहवो भविष्यद्वक्तारो धार्म्मिकलोकाश्च दिदृक्षन्तोपि नापश्यन् तथा यूयं यद्यत् शृणुथ तत् ते शुश्रूषन्तोपि नाशृण्वन्।

कृषीबलीयदृष्टान्तस्यार्थं शृणुत। मार्गपार्श्वे यानि वीजानि पति- १८ तानि तदर्थ एषः, यदा कश्चिद् राज्यस्य कथां श्रुत्वा न बुध्यते तदा पापा- १९ त्मागत्य तन्मनस उप्तां कथां हरति। एवं पाषाणस्थले वीजान्युप्तानि २० तदर्थोयं, कश्चित् तां कथां श्रुत्वैव सानन्दं गृह्लाति किन्तु तन्मनसि २१ मूलाप्रवेशात् स किञ्चित्कालमेव तिष्ठति पश्चात् तत्कथातः कस्मिंश्चित् क्लेशे ताडनायां वोपस्थितायां स तदैव व्याहन्यते। एवं कण्टकिवनमध्ये २२ यद्वीजान्युप्तानि तदर्थोयं, केनचित् कथायां श्रुतायां सांसारिकी चिन्ता धनभ्रान्तिश्च तां कथां ग्रसतस्तस्मात् सा विफला भवति। अपरम् उर्व्वर- २३ भूमौ यानि वीजान्युप्तानि तदर्थ एषः, ये तां कथां श्रुत्वा बुध्यन्ते ते फलिताः केचित् शतगुणानि केचित् षष्टिगुणानि केचिच्च त्रिंशद्गुणानि फलान्युत्पादयन्ति।

सोऽपरामपि दृष्टान्तकथां कथितवान् स्वर्गराज्यम् एतादृशगृहस्थेन २४ तुल्यं यः स्वक्षेत्रे सुवीजमुप्तवान् किन्तु रजन्यां लोकेषु निद्रितेषु तस्य २५ रिपुरागत्य तस्य गोधूमवीजमध्ये वन्यघासवीजम् अवपत्। पश्चाद् यदा २६ वीजान्यङ्कुरितानि मञ्जरीयुक्तानि तदा वन्यघासाश्चादृश्यन्त। ततो २७ गृहस्थस्य दासा एत्य तमवदन् हे महेच्छ त्वं क्षेत्रे भद्रवीजानि किं नावपः? वन्यघासाः कुतो जाताः? तदा स तान् अवोचत् केनापि रिपुरेतत् २८

२९ ज्ञातवान्। दासा अवदन् वयं गत्वा तान् किमुत्पाटयिष्यामो भवतः केच्छा ? स कथितवान् नहि वन्यघासान् उत्पाटयद्भिर्युष्माभिः साकं यूयं
३० गोधूमान् अप्युत्पाटयिष्यथ। अतः शस्यकेदनकालं यावत् द्वौ सह वर्द्धेतां पश्चात् कर्त्तनकाले कार्त्तकान् वक्ष्यामि यूयमादौ वन्यघासान् संगृह्य दाहनार्थं वीटिकाः बद्धा निधापयत किन्तु गोधूमान् भाण्डागारे निधापयत।
३१ 　ततः सोन्यां दृष्टान्तकथाम् उत्थाप्य तेभ्यः कथितवान्। कश्चिन मानुषः
३२ सर्षपबीजमेकं स्वक्षेत्र उप्तवान् तत्सर्षपबीजं सर्व्वस्मात् क्षुद्रतरमप्यङ्कुरितं सत् सकलशाकेभ्यो वृद्धिमेत्य तादृशः पादपो जातो यच्छाखासु विहायसीयविहगा आगत्य न्यवसन् स्वर्गराज्यम् एतादृशस्य सर्षपैकस्य तुल्यम्।
३३ 　पुनरपि स तेभ्य एकामुपमाकथाम् अकथयत् काचिद् योषित् किण्वं शेटकत्रयमितगोधूमचूर्णमध्ये सर्व्वमिश्रणपर्य्यन्तं न्यधापयत् तत्किण्ववत् स्वर्गराज्यम्।
३४ 　इत्थं यीशु र्लोकनिवहाय कथा एता उपमया कथितवान् विनोपमां
३५ तेभ्यः कामपि कथां नाकथयत्। अनेन

‘अहं दृष्टान्तवाक्यैस्तु करिष्याम्युपदेशनं।
जगदारम्भकालाद् ये प्रसङ्गाः परिगोपिताः।
सम्यक् प्रचारयिष्यामि प्रसङ्गांस्तादृशानहं।’

एतद् यद् वाक्यं भविष्यद्वादिनोक्तमासीत् तत् सफलमभूत्।
३६ 　ततो यीशुः सर्व्वलोकान् विसृज्य गृहं प्रविष्टः; तदा तस्य शिष्या-स्तदन्तिकम् आगत्य व्याहरन् क्षेत्रीयवन्यघासदृष्टान्तम् अस्मान् स्पष्टं वदतु
३७ भवान्। ततः स प्रत्यवादीत् यो भद्रबीजानि वपति स मानवपुत्रः, क्षेत्रं
३८ जगत्, भद्रबीजानि च राज्यस्य सन्तानाः, वन्यघासास्तु पापात्मनः सन्तानाः,
३९ येन रिपुणा तान्युप्तानि स शैतान्। अपरं कर्त्तनकालो जगदन्तः, कार्त्त-
४० कास्तु स्वर्गीयदूताः। तथाहि यदद् वन्यघासान् संगृह्य दाहयन्ति तद्वद्
४१ जगदन्ते भविष्यति, अर्थात् मानवपुत्रः स्वीयदूतान् प्रेषयिष्यति ते

तदीयराज्यात् सर्व्वान् विघ्नान् अधार्म्मिकलोकांश्च संगृह्य यत्र रोदनं ४२
दन्तघर्षणञ्च भवति तत्राग्निकुण्डे निक्षेप्स्यन्ति। तदा धार्म्मिकलोकाः स्वेषां ४३
पितूराज्ये सूर्य्यइव तेजःपुञ्जा भविष्यन्ति। यस्य श्रोतुं श्रवसी स्तः स
शृणुयात्।

अपरं यः कश्चित् केदारे निधिं निरीक्ष्य गोपायति परस्तात् सानन्दं ४४
व्रजित्वा निजसर्वस्वं विक्रीय तं केदारं क्रीणाति सइव स्वर्गराज्यं।

अपरञ्च यो वणिग् उत्तममुक्ता मृगयित्वा महार्घां मुक्तां विलोक्य ४५
निजसर्व्वस्वं विक्रीय तां क्रीणाति सइव स्वर्गराज्यम्। ४६

तथाहि जलधिक्षिप्तेन बहुधावस्तुसंग्राहिणानायेन समं स्वर्गराज्यम् ४७
तदानाये पूर्णे जना यद्वत् तं रोध आनीय उत्तमानि गृहीत्वा भाजनेषु ४८
निधापयन्ति किन्त्वधमानि मुञ्चन्ति तद्वज् जगतोन्ते भविष्यति वस्तुतः ४९
स्वर्गीयदूता आगत्य धार्म्मिकानां मध्यात् कलुषिणः पृथक् कृत्वा वह्नि- ५०
कुण्डे निक्षेप्स्यन्ति तत्र रोदनं दन्तघर्षणञ्च जनिष्यते।

यीशुना तेऽपृच्छ्यन्त किं युष्माभिः सर्व्वमेतद् अबोधि? ततस्तेऽब्रुवन् ५१
बुद्धं प्रभो। ततः सोऽवोचत् यो गृही स्वभाण्डागारान् नव्यानि पुरातनानि ५२
च द्रव्याणि निःसारयति सइव शिक्षितस्वर्गराज्यीयः सर्व्व उपदेष्टा।

अनन्तरं यीशुरेता दृष्टान्तकथाः समाप्य तत्स्थानाद् अव्राजीत्। पुनः ५३
स्वदेशम् एत्य भजनभवने लोकान् उपादिक्षत् ततस्ते विस्मित्य व्याहरन् ५४
एतस्येदृशं ज्ञानम् आश्चर्य्यकर्म्म च कुतोऽभूत् किमयं वर्द्धकेः पुत्रो नहि?
किमस्य जननीनाम मरियम् नहि? याकुब् यूषफ् शिमोन् यिहूदा एते ५५
च किमस्य न सहजाः? किमस्य भगिन्योऽस्मदन्तिके नो वसन्ति च? ५६
तथात्वे कस्माद् एतेनैतानि लब्धानि? इत्थं स तेषामन्तराय इवाभूत्; ५७
तस्माद् यीशुस्तान् अगादीत् स्वदेशीयजनान् विना कुत्रापि भविष्यद्वादी
नावमानं लभते। तेषामविश्वासात् स तत्र न बह्वाश्चर्य्यम् अकार्षीत्। ५८

## १४ चतुर्दशोऽध्यायः।

१ मज्जयितृयोहनो बधः १३ पञ्चभिः पूपै र्द्वाभ्यां मत्स्याभ्याञ्च पञ्चसहस्राणां पुंसां भोजनं २२ सिन्धूपरि ख्रीष्टस्य व्रजनं ३४ बहुलोकानां स्वास्थ्यञ्च।

१ तदानीं राजा हेरोद् यीशो र्यशः श्रुत्वा स्वकिङ्करान् उक्तवान् एष
२ मज्जयिता योहन् भविष्यति मृतानां मध्यात् तदुत्थानात् तेनेत्-
३ थमाश्चर्य्यक्रिया प्रकाश्यते। पूर्व्वं हेरोद् स्वभ्रातुः फिलिपस्य जायाया हेरो-
४ दियाया अनुरोधाद् योहनं धृत्वा बद्धा कारायामस्थापयत्। यतो योहन्
५ अकथयद् भवतैषा न विवाह्या। तस्मात् राजा तं हन्तुमिच्छन्नपि लोकेभ्यो बि-
६ भयाम्बभूव यस्मात् सर्व्वे योहनं भविष्यद्वादिनम् अमन्यन्त। किन्तु हेरोदो
जन्मदिनीयमह आगते हेरोदियाया दुहिता तेषां समक्षं नृत्यित्वा
७ हेरोदम् अप्रीणयत्। तस्मात् भूपतिः शपथं कुर्व्वन् इति प्रत्यज्ञासीत्, त्वया यद्
८ याच्यते, तदेवाहं दास्यामि। सा कुमारी स्वीयमातुः शिक्षां लब्धा बभाषे, मज्जयितु
९ र्योहन उत्तमाङ्गं भाजने समानीय मह्यं विश्राणय। ततो राजा शुशोच, किन्तु भोजनायो-
१० पविशतां सङ्गिनां स्वकृतशपथस्य चानुरोधात् तत् प्रदातुं समादिदेश। पश्चात् कारां
११ प्रति नरं प्रहित्य योहन उत्तमाङ्गं छित्त्वा भाजन आनाय्य तस्यै कुमार्य्यै
१२ व्यश्राणयत्, ततः सा स्वजनन्याः समीपं तन्निनाय। पश्चात् योहनः शिष्या आगत्य
कायं नीत्वा श्मशाने स्थापयामासुः ततो यीशोः सन्निधिं व्रजित्वा तद्वार्त्तां बभाषिरे।

१३ अनन्तरं यीशुरिति निशम्य नावा निर्जनस्थानम् एकाकी गतवान्, पश्चात्
१४ मानवास्तत् श्रुत्वा नानानगरेभ्य आगत्य पदैस्तत्पश्चाद् ईयुः। तदानीं यीशु र्बहिरा-
गत्य महान्तं जननिवहं निरीक्ष्य तेषु कारुणिकः मन् तेषां पीडितजनान्
१५ निरामयान् चकार। ततः परं सन्ध्यायां शिष्यास्तदन्तिकम् आगत्य कथयाञ्चक्रुः,
इदं निर्जनस्थानं वेला चावसन्ना; तस्मात् मनुजान् स्वस्वग्रामं गन्तुं स्वार्थं
१६ भक्ष्यद्रव्याणि क्रेतुञ्च भवान् तान् विसृजतु। किन्तु यीशुस्तानवादीत्, तेषां
१७ गमने प्रयोजनं नास्ति, यूयमेव तान् भोजयत। तदा ते प्रत्यवदन्, अस्माकमत्र
१८ केवलं पञ्च पूपा द्वौ मत्स्यौ च सन्ति। तदानीं तेनोक्तं तानि मदन्तिकम् आन-
१९ यत। अनन्तरं स मनुजान् यवसोपर्य्युपवेष्टुम् आज्ञापयामास; अपर तत् पञ्च पूपान्
मीनद्वयञ्च गृह्णन् स्वर्गं पश्यन् ईश्वरीयगुणान् अनूद्य भंक्त्वा शिष्येभ्यो दत्तवान्, शिष्याश्च

लोकेभ्योऽदुः। ततः सर्व्वे भुक्त्वा तृप्तिं गताः, तथावशिष्टै र्भक्ष्यैस्ते द्वादश डल्लकान् २०
पूरयित्वा समगृह्लीषुः। अपरं कृतभोजनजनानां योषाबालकान् विना २१
प्रायेण पञ्च सहस्राणि पुमांस आसन्।

ततःपरं यीशुः सर्व्वलोकानां विसर्जनकाले शिष्यानादिशत् नावम् २२
आरुह्य मदग्रे पारं यातेति। ततो लोकेषु विसृष्टेषु स विजने प्रार्थयितुं २३
गिरिं गत्वा, आसन्ध्यं तत्रैकाकी स्थितवान्। किन्तु तदानीं सम्मुखागत- २४
वातत्वात् मध्येऽर्णवम् उर्म्मिभिस्तरी समदोलि। तदा निशातुर्य्ययामे २५
यीशुः सिन्धूपरि पद्भ्यां व्रजन् तेषां समीपं प्राप्नोत् किन्तु शिष्यास्तं २६
सिन्धूपरि व्रजन्तं विलोक्य समुद्विग्ना अजल्पन् एष भूतः पुनः शङ्कया
प्रोच्चैरशब्दायन्त। तदैव यीशुस्तानभाषत सुस्थिरा भवत मा भैष्ट २७
एषोऽस्मि। ततः पितर इत्यभाषत हे प्रभो चेद्भवान् भवति तर्हि मां भव- २८
दन्तिकं तोयोपरि यातुमादिशतु। ततस्तेनागन्तुम् आदिष्टः पितरस्तरण्या २९
अवरुह्य तोयोपरि तदन्तिकम् अव्राजीत्। किन्तु प्रचण्डपवनं निरीक्ष्य ३०
साध्वसात् सलिले मंक्तुमारब्धः, तत उच्चैरवदत् हे प्रभो मामव। यीशुस्त- ३१
दैव करं प्रसार्य्य तं धृत्वा गदितवान् हे अल्पविश्वासिन् कुतस्त्वं समशेथाः? ३२
ततस्तयोस्तरीमारूढयो र्वातो निरवर्त्तत। तदानीं ये तर्य्यामासन् त आगत्य ३३
तं प्रणम्यावोचन् भवानेव सत्य ईश्वरतनयः।

अनन्तरं ते पारं मित्वा गिनेषरन्नामकप्रदेश उपातिष्ठन् तदा तत्रत्य- ३४
लोका यीशुं परिचीय तद्देशस्य चतुर्दिशो वार्त्तां प्रहित्य यत्र यत्र ये ये रो- ३५
गिण आसन् तान् सर्व्वान् तमुपानायन्। अपरं तद्वसनग्रन्थिमात्रं तान् स्पर्श- ३६
यितुं तं व्यनयन् यावन्तो जनास्च ताम् अस्पृशन् ते सर्व्वे निरामया जाताः।

---

१५ पञ्चदशोऽध्यायः।

१ अध्यापकफिरूशिनां भर्त्सनं १० मानुषापवित्रत्वहेतुनिर्णयः २१ किनानीया योषितः कन्यायाः स्वास्थ्यं २९ बहूनां स्वास्थ्यं ३२ सप्तभिः पूपैरल्पमीनैश्च चतुःसहस्र पुंसामाशनञ्च।

अपरं यिरूशालम् पुरीयाः कियन्तोऽध्यापकाः फिरूशिनश्च यीशु- १

२ मुपागत्यागदन् अप्रक्षालितकरै र्भुक्त्वा भवतश्शिष्याः कुतः प्राचां परम्परा-
३ गताचारं लङ्घन्ते? ततो यीशुः प्रत्यभाषत युष्माभिः स्वपरम्परागताचारैः
४ कुत ईश्वराज्ञा लङ्घ्यते? ईश्वरस्त्वित्यादिशत् यूयं मातरपितरौ सम्मन्यध्वं
५ तथाहि येन मातरपितरौ निन्द्येते स निश्चितं म्रियतां किन्तु युष्माभि-
रुच्यते, यस्तातं मातरं वा वक्ति त्वं मत्तो यत् लभसे तत् न्यवेद्यत स स्वमा-
६ तरपितरौ पुन र्न सम्मंस्यते। इत्थं युष्माभिः स्वपरम्परागताचारेणेश्वराज्ञा
७ लुप्यते। हे कपटिनः सर्व्वे यिशायियो युष्मानधि भविष्यद्वाक्यमिदं
सम्यगकथयत्, यथा

८ 'एते लोका मुखैरेव समायान्ति ममान्तिकम्।
स्वकीयैरधरैरेव सम्मन्यन्ते च मान्तु ते।
९ तेषां मनांसि विद्यन्ते किन्तु मत्तो विदूरतः।
शिक्षयित्वा विधीन् न्नाज्ञा भजन्ते ते वृथैव माम्।

१० ततः परं यीशु र्लोकनिवहम् आहूय व्याहरत् यूयं श्रुत्वा बुध्यध्वम्।
११ आस्येन यत् प्रविशति तत् न मानुषम् अपवित्रं करोति किन्तु
१२ यत् मुखात् निर्गच्छति तत् मानुषम् अपवित्रं करोति। तदा शिष्या
आगत्य तमवदन् तत् कथां श्रुत्वा फिरूशिनो व्याहता इति किं भवान्
१३ जानाति? किन्तु स प्रत्यवोचत् मम स्वर्गस्थपित्रा ये तरवो न रोपि-
१४ तास्ते सर्व्वे उत्पाटिष्यन्ते। तान् विसृजत ते स्वयमन्धाः मन्तोप्यन्धान
१५ मार्गं दर्शयन्ति यद्यन्धोऽन्धं मार्गं दर्शयति तर्ह्युभौ गर्त्ते पततः। तदा
१६ पितरस्तमवोचत् दृष्टान्तमेतम् अस्मान् बोधयतु। यीशुनोक्तं यूयं किय-
१७ द्यापि निर्बोधा आध्वे कथामेतां किं न बुध्यध्वे वदनेन यत् प्रविशति
१८ तत् तुन्दे पतित्वा वहि र्निगच्छति मनसोनिर्गतत्वात् तेन मानुषो-
१९ ऽपवित्रीक्रियते। यतोऽन्तःकरणात् कुचिन्तावधपरस्त्रीवेश्यागमनस्तेया-
२० नृत्यसाक्ष्येश्वरनिन्दा निर्गच्छन्ति। ते मनुष्योऽपवित्रः क्रियते किन्त्वप्रक्षा-
लितकराभ्यां भोजनं मनुष्यं नापवित्रं करोति।

२१ ततो यीशुस्तत्स्थानात् प्रस्थाय सोरसीदोन् पुरयोः सीमायामुपातिष्ठत्।

तदा तस्मीमात आगत्य किनानीया योषिद् उच्चैस्तमाख्यत् हे प्रभो २२ दायूदः सन्तान मदेका कन्या भूतग्रस्ता सती महाक्लेशमाप्नोति मयि करुणां विधेहि। किन्तु यीशुस्तां किमपि न प्रत्यवादीत्; ततः शिष्या २३ आगत्य तं न्यवेदयन् एषा योषिद् अस्मत्पश्चाद् उच्चैराह्वयती समायाति एनां विसृजतु। तदा स इति प्रत्यवोचत् इस्रायेल्गोत्रहारितमेषान् २४ विनान्यस्य कस्यापि समीपं प्रेषितो न भवामि। पश्चात् सा योषित् तं २५ प्रणम्य व्याहरत् हे प्रभो मामुपकरोतु। किन्तु स प्रत्यवादीत्, बालकानां २६ भक्ष्यं नीत्वा शुनां समीपे निक्षेप्तुं नोचितम्। तदा साभाषत हे प्रभो २७ तत् सत्यं तथापि प्रभो र्भोजनाधारात् यत् किञ्चित् पतति तत् श्वानः खादन्ति। ततो यीशुः प्रत्यवोचत् हे योषित् तव महान् विश्वासः, तस्मात् २८ तवाभिलाषः सिद्ध्यतु तेन तदैव तस्या दुहिता स्वस्थाभूत्।

ततःपरं यीशुस्तत्स्थानात् प्रस्थाय गालील्प्रदेशीयजलधेः समीपमेत्य २९ गिरिमारुह्य तत्रोपाविशत्। तदा लोका बहून् खञ्जान्धमूककुणिक- ३० करजनान् आनीय यीशोश्चरणान्तिकेऽस्थापयन् ततः स तान् निरामयान् अकार्षीत्। इत्थं मूकः कथयति शुष्ककरः स्वास्थ्यमेति खञ्जो व्रजति ३१ पश्यति चान्ध एतानि विलोक्य लोका आश्चर्यं मन्यमाना इस्रायेल ईश्वरं धन्यमवदन्।

तदा यीशुः स्वशिष्यानाहूय व्याहरत् लोकान् प्रति मम करुणा ३२ जायते ते दिनत्रयं मया साकमासते तेषां समीपे भक्ष्यद्रव्याणि न सन्ति तस्मादहं तान् अनाहारान् न विस्रक्ष्यामि चेत् ते पथि क्लाम्ता भवन्ति। तदा शिष्या अवदन् अस्मिन् प्रान्तरमध्ये एतावतां लोकानां तृप्त्यर्थं वयं ३३ कुत्र पूपान् प्राप्स्यामः? यीशुना पृष्टं युष्माकं कति पूपाः सन्ति? तेऽवदन् ३४ सप्त पूपाः कियन्तः क्षुद्रमत्स्याश्च सन्ति। तदा स लोकान् भूम्यामुपवेष्टुम् ३५ आज्ञाप्य तान् सप्त पूपान् मत्स्यांश्चादाय ईश्वरगुणान् उक्त्वा भंक्त्वा शिष्ये- ३६ भ्योदात् शिष्या लोकेभ्योदुः। तेन सर्व्वे भुक्त्वा तृप्तिं गताः, ततोऽवशिष्टभक्ष्यैः ३७ पूर्णाः सप्त डल्लकाश्च गृहीताः। कृतभोजनानामेतेषां स्त्रीबालकान् विना ३८

३९ चतुःसहस्राणि पुमांस आसन्। तत्पश्चात् यीशुर्लोकनिवहं विसृज्य नावमारुह्य मग्दलाप्रदेशं गतवान्।

---

## १६ षोडशोऽध्यायः।

१ फिरूशिनामद्भुतचिह्नान्वेषणं ५ शिष्याकिण्वे सावधानतापदेशः १३ खीष्टमधि लोकानामनुमानं पितरस्य स्वीकारः २१ खीष्टस्य स्वमृतिप्रकाशनं पितरं प्रति तिरस्कारणं २४ स्वानुगामिलोकानामुपदेशनञ्च।

१ तदा फिरूशिनः सिदूकिनश्चागत्य तत्परीक्षार्थं नभसीयं किमपि २ चिह्नं दर्शयितुं तं न्यवेदयन्। तेन स प्रत्यवदत् सन्ध्यायां नभसो रक्तताहेतोर्यूयं वदथ श्वो निर्म्मलदिनं भविष्यति तथा प्रगे खरक्ततामलिनताभ्यां वदथ ३ अद्य वात्या भविष्यति। हे कपटिनो यूयं नभोमण्डलस्य चिह्नानि यदि ४ बोद्धुं शक्नुथ तर्हि कालस्यैतस्य लक्षणं कुतो बोद्धुं न शक्नुथ? एतत्कालीनो दुष्टो व्यभिचारिवंशश्च चिह्नं मृगयते किन्तु यूनसो भविष्यद्वादिनश्चिह्नं विना किमपि चिह्नं न दायिष्यते। तदा स तान् विहाय प्रातिष्ठत्।

५ ततःपरं पारान्तरं गत्वा तस्य शिष्याः पूपमानेतुं व्यस्मरन्। यीशुस्तान् ६ आचष्ट यूयं फिरूशिसिदूकिनां किण्वं प्रति सावधानाः सतर्काश्च तिष्ठत। ततस्ते ७ परस्परं विविच्य वक्तुमारभन्त वयं पूपमानेतुं विस्मृता अत इति कथयति। ८ किन्तु यीशुस्तद् विज्ञाय प्रोक्तवान् हे अल्पविश्वासिनो यूयं पूपानानयने ९ कुतः परस्परमेवं विचारयथ? युष्माभिः किं नाद्यापि बुध्यते? पञ्चभिः पूपैः पञ्चसहस्राणां पुंसामाशने जाते यूयम् अवशिष्टपूर्णान् कति डल्लकान् १० गृहीतवन्तः; तथा सप्तभिः पूपैः चतुःसहस्राणि पुरुषान् भोजयित्वापि ११ कति डल्लकान् उत्थापितवन्तस्तत् किं युष्माभि र्न स्मर्य्यते? तस्मात् फिरूशिसिदूकिनां किण्वे सावधानास्तिष्ठत इतिकथाम् अहं पूपे नाकथयम् १२ इति युष्माभिः कुतो न बुध्यते? तदा पूपकिण्वं प्रति सावधाना भवतेति नोक्त्वा फिरूशिसिदूकिनां उपदेशं प्रति सावधाना भवतेति कथितवान् एतत् तैरबोधि।

१३ अपरं यीशुः कैसरियाफिलिपिप्रदेशम् आगत्य शिष्यानपृच्छत् १४ अहं मनुष्यपुत्रो लोका मां कं वदन्ति? तदा ते व्याहरन् केचित् कथयन्ति

भवान् मज्जयिता योहन् केचिच्च व्याचक्षते भवान् एलियः केचित्तु भाषन्ते भवान् यिरिमियो वा कश्चिद् भविष्यद्वक्तेति। पश्चात् स पृष्टवान् यूयं मां १५ कं वदथ? ततः शिमोन् पितरः प्रत्यवोचत् त्वम् अमरेश्वराभिषिक्तपुत्रः। १६ ततो यीशुरकथयत् हे यूनसः पुत्र शिमोन् त्वं धन्योसि यतः कोपि १७ मानवस्त्वयि ज्ञानमिदं नोदाययत् किन्तु मम स्वर्गस्थः पिता। अतोहं १८ त्वां वदामि त्वं पितरोसि, अर्थात् प्रस्तरः, तथैतस्य प्रस्तरोपरि स्वसमाजमहं निर्म्मास्यामि तेन नरको बलेन तं पराजेतुं न शक्ष्यति। अपरं तुभ्यमहं १९ स्वर्गराज्यस्य कुञ्जिकां दास्यामि तेन त्वं मह्यां यत् भन्त्स्यसि तत् स्वर्गे भन्त्स्यते तथा मह्यां यन् मोचयिष्यसि तत् स्वर्गे मोक्ष्यते। ततः शिष्यान् आदि- २० शत् यदहम् अभिषिक्तो यीशुरेषा कथा युष्माभिः कस्मैचित् मा कथ्यताम्।

अपरं यिरूशालम्नगरं गत्वा प्राचीनलोकानां प्रधानयाजकानां २१ अध्यापकानाञ्च समीपे बहुदुःखभोजित्वं तै र्हतत्वं तृतीयदिवस उत्थानञ्च मयावश्यकर्त्तव्यम् कथामेतां यीशुस्तत्कालमारभ्य तान् ज्ञापयितुम् आरभत। तदा पितरस्तस्य करं धृत्वा तर्जयित्वा कथितवान् हे प्रभो त्वयि २२ दया भवतु त्वय्येतन्न घटताम्। किन्तु स मुखं परावर्त्त्य पितरमाचष्ट हे २३ विघ्नकारिन् मत् सम्मुखाद् दूरीभव मां त्वं बाधसे, ईश्वरीयकार्य्यतो मानुषीयकार्य्यं तुभ्यं रोचते।

अनन्तरं यीशुः स्वशिष्येभ्योऽकथयत्, यदि कश्चिन् मदनुगामी २४ भवितुमिच्छति तर्हि स्वं दाम्यतु स्वक्रुशमादाय मत्पश्चाद् आयातु च। यतः स्वप्राणान् रक्षितुं य इच्छति तान् स हारयिष्यति किन्तु यो मत्कृते २५ स्वप्राणान् हारयति स तान् प्राप्स्यति। मानुषो यदि सर्व्वजगत् प्राप्नोति २६ स्वप्राणान् हारयति च तर्हि तस्य को लाभः? वा मानुषः स्वप्राणविनिमयेन २७ किं दातुं शक्नोति? मानुषपुत्रः स्वदूतैः साकं पितुः प्रभावेनायास्यति तदैकैकमानुषं स्वस्वकर्म्मानुरूपं फलं दास्यति। अहं युष्मान् सत्यं वदामि २८ मानुषपुत्रं स्वराज्यमागतमदृष्ट्वा मृत्यास्वादं न प्राप्स्यन्ति तादृशाः कतिपयजना अत्रापि दण्डायमानाः सन्ति।

१७ सप्तदशोऽध्यायः।

१ ख्रीष्टस्य मूर्त्त्यन्तरं ९ एलियोद्देश्यकवाक्यं,१४ मृगिरोगिणा रोगशान्तिः, २२ स्वमृत्यु-वाक्यप्रकाशः, २४ करदानार्थसङ्केतक्रिया।

१ दिनषट्कात् परं यीशुः पितरं याकुवं तद्भ्रातरं योहनञ्च गृहीत्वा उच्च-
२ पर्व्वतस्य विजनमानीय तेषां समक्षम् मूर्त्त्यन्तरं धृतवान्। तेन तस्यास्यं
३ रविवत् तेजस्वि तद्भूषणं दीप्तिवत् शुक्लमभूत्। मूसैलियौ तेन साकं
४ कथां कथयितुं तं साक्षात् कृतवन्तौ। तदा पितरो यीशुं कथितवान्
हे प्रभोऽस्माकमत्र स्थितिः शुभा ; यदि भवान् इच्छति तर्हि भवतः
कृते एकं मुसाः कृते एकम् एलियस्य च कृते एकं दूष्यत्रयं निर्म्माम।
५ इतिकथनकाले उज्ज्वलमेघस्तेषु छायामकरोत् मेघादिति नभोवाण्यभूत्
एष मम प्रियपुत्रः, अत्र मम परमसन्तोषः कथास्य युष्माभिः श्रूयताम्।
६ किन्त्वेतां कथां श्रुत्वैव शिष्या अतिशङ्कायुक्ता न्यङ्मुखाः पतिताः। तदा
७ यीशुरेत्य तेषां गात्रं स्पृष्ट्वावदत् उत्तिष्ठत मा भैष्ट। तदा ते नेत्राण्युन्मील्य
८ यीशुं विना कमपि नापश्यन्।

९ ततोऽद्रेरवरोहणकाले यीशुस्तान् इत्यादिशत् यावन्मनुष्यपुत्रः
१० श्मशानान्नोत्थास्यति तावदिदं दर्शनं युष्माभि र्न वाच्यं। तदा शिष्यास्तम-
११ पृच्छन् प्रथममेलिय आयास्यतीत्यध्यापकाः कुतो वदन्ति? ततो यीशुः
१२ प्रत्याचष्ट एलिय आदावेत्य सर्व्वं साधयिष्यतीति सत्यं किन्त्वहं युष्मान्
वच्मि एलिय एत्य गतः, ते तमपरिचीय तस्मिन् यथेच्छं व्यवाहरन्;
१३ तेषामन्तिके मनुजपुत्रेणापि तद्वद् दुःखं भोक्तव्यम्। तेन योहनवगाहकम्
अधि कथामेतामकथयत् तत्शिष्या इत्यबोध्यन्त।

१४ तेषु लोकनिवहान्तिकमागतेषु कश्चिज्जनो यीशोरन्तिकमेत्य जानुपातं
१५ कृत्वा कथितवान् हे प्रभो मत्पुत्रं दयस्व सोपस्मारामयेन पीडितो मुहुर्मुहु-
१६ र्वह्नौ तोये च पतति। ततो भवच्छिष्याणां समीपं तमानयं किन्तु ते
१७ निरामयं कर्त्तुं नाशक्नुवन्। तदा यीशुः प्रत्यवोचत् रे अविश्वासिविपथ-
गामिवंश कतिकालं युष्मत्सन्निधौ स्थास्यामि? कतिकालं वा युष्मद्वारं
१८ सहिष्ये? तं मत्समीपमत्रानय। ततो यीशुना तर्ज्जितो भूतस्तं विहाय गतः,

बालकस्तदैव स्वस्थोऽभूत्। ततः शिष्या यीशोः सन्निधिमेत्य गुप्तं व्याहरन् १९
वयं कुतस्तं भूतं त्याजयितुं न शक्ताः? यीशुस्तानाचष्ट युष्माकमविश्वासात् २०
युष्मानहं सत्यं वच्मि यदि युष्माकं सर्षपैकवद् विश्वासो जायते तर्हि
युष्माभिरेतदद्रिं स्थानान्तरं गन्तुमुक्ते स तदैव यास्यति युष्माकमसाध्यं
किमपि न स्थास्यति। किन्तु प्रार्थनोपवासौ विनैतादृशो भूतो न त्याज्यते। २१

तेषां गालील्प्रदेशभ्रमणकाले यीशुस्तानवोचत् मनुजपुत्रो लोकानां २२
करेषु समर्पिष्यते; तै र्हते तृतीयदिन उत्थापिष्यते तेन तेऽतीवदुःखिता २३
जाताः।

ततस्तेषु कफर्नाहूम्पुरं गतेषु करसंग्राहिणः पितरमुपागत्याप्राक्षुः, युष्म- २४
द्गुरुः किं राजकरं न ददाति? पितरोऽवोचत् ददाति। तस्मिन् गृहमध्य- २५
मागते तत्कथाकथनात् पूर्व्वं यीशुः कथितवान् हे शिमोन् मह्या राजानः
स्वस्वसन्तानेभ्यः किं विदेशिभ्यः केभ्यः करं राजस्वञ्च गृह्लन्ति? यूयमत्र
किं बुध्यध्वे? पितरोवदत् विदेशिभ्यः। यीशुनोक्तं तर्हि सन्ताना मुक्ताः २६
सन्ति। तथापि वयं यथा तेषां विघ्नान् न जनयाम तदर्थं सिन्धुतटं २७
गत्वा वडिशं पातय ततः प्रथमं यो मत्स्य उत्थास्यति तं धृत्वा तन्मुखं
व्यादाय रूप्यतोलकं प्राप्स्यसि तदानीय मम तव च कृते तेभ्यो देहि।

---

१८ अष्टादशोऽध्यायः।

१ नम्रतायां विघ्नानुत्पादे चोपदेशः, १५ दोषिभ्रातरि व्यवहारः, २१ क्षमायाः संख्यानिश्चयः, २३ क्षमाकरणस्य दृष्टान्तः।

तदानीं शिष्या यीशोः समीपमेत्याप्राक्षुः स्वर्गराज्यमध्ये कः श्रेष्ठः? ततो १
यीशुः शिशुमेकमाहूय तेषां मध्ये स्थापयित्वावदत् युष्मानहं सत्यं ब्रवीमि २
मनः परावर्त्त्य क्षुद्रबालकसदृशेषु युष्मासु न सत्सु स्वर्गराज्यं प्रवेष्टुं न शक्ष्यथ। ३
य एतस्य क्षुद्रबालवत् स्वं नम्रं करोति सएव स्वर्गराज्ये श्रेष्ठः। यस्य मम नाम्ना ४
एतादृक्क्षुद्रबालं गृह्लाति स मामेव गृह्लाति। किन्तु मयि विश्वासिनाम् ५
एषां क्षुद्रप्राणिनां कस्यचिदेकस्य विघ्नसमुत्पादनात् तस्य कण्ठे पेषणी- ६
बन्धनपूर्व्वकं सिन्धवगाधतोये मज्जनं तस्य वरम्। विघ्नाज्जगत् सन्तप्स्यते ७
विघ्नोऽवश्यं जनिष्यते किन्तु येन मनुजेन विघ्नो जनिष्यते सएव सन्तप्स्यते।

८ अतो तव करश्चरणो वा यदि बाधते तर्हि तं छित्त्वा स्वतो निक्षिप कर-द्वयपदद्वयवतोऽनन्तवह्नौ निक्षेपात् खञ्जतया शुष्ककरतया वा जीवन-
९ लाभस्तव वरम्। चक्षुर्यत्तवान्तरायं जनयति तदा तदुत्पाट्य स्वतो निक्षिप
१० द्विनेत्रस्य ते नरकाग्नौ क्षेपादेकनेत्रस्य तव जीवनलाभो वरं। अतोऽवधत्त क्षुद्रप्राणिनामेतेषां कमपि मा तुच्छीकुरुत यतोहं युष्मान् सत्यं वच्मि
११ स्वर्गे तेषां दूता मम स्वर्गस्थपितुरास्यं नित्यं पश्यन्ति। ये हारितास्तानन्-
१२ सन्धातुं मानवपुत्र आगमत्। युष्माभिरत्र किं विविच्यते? कस्यचिद् यदि शतं मेषास्तिष्ठन्ति तेषाञ्चैको हार्य्यते तर्हि स एकोनशतमेषान् विहाय
१३ गिरिं गत्वा तं हारितमेषं किं न मृगयते? यदि घटनया तन्मेषोद्देशं लभते तर्हि युष्मानहं सत्यं ब्रवीमि तदविपथगामिभ्य एकोनशतमेषेभ्योपि
१४ तदेकमेषकृतेऽधिकमाह्लादते। तद्वत् एतत्क्षुद्रप्राणिनां यद् एकोपि नश्यति युष्मत्स्वर्गस्थपितुस्तादृशाभिमतं नहि।

१५ अपरं यदि तव भ्राता तव किमप्यपराध्यति तर्हि गत्वा केवलयुवयोः सतोस्त्वं तद्दोषं तं ज्ञापय। तत्र स यदि तव वाचं शृणोति तर्हि त्वं स्वभ्रा-
१६ तरं प्राप्तवान् किन्तु चेन्न शृणोति तर्हि द्वाभ्यां त्रिभि र्वा साक्षिभिः सर्व्ववाक्यं यथा निश्चितं भवति तदर्थम् एकं द्वौ वा जनौ सङ्गिनौ कृत्वा याहि।
१७ तत्र स यदि तेषां वाक्यं न मन्यते तर्हि समाजं तद् वेदय किन्तु यदि समाजवाक्यमपि न मन्यते तर्हि स तव सन्निधौ देवार्च्चकचण्डालयोः
१८ सदृशो भवतु। युष्मानहं सत्यं वच्मि युष्माभिः पृथिव्यां यत् भन्त्स्यते
१९ तत् स्वर्गे भन्त्स्यते यच्च मह्यां मोच्यते स्वर्गे तन्मोच्यते। पुनरहं युष्मान् वच्मि मह्यां युष्माकं द्वौ जनौ यद्येकमन्त्रणौ किञ्चित् प्रार्थयेते तर्हि मम
२० स्वर्गस्थपितुः सकाशात् तयोः कृते तत् सम्पत्स्यते। यतो यत्र द्वौ त्रयो वा जना मन्नाम्नि मिलन्ति तत्र तेषां मध्येऽहं तिष्ठामि।

२१ तदा पितरस्तत्समीपमेत्य कथितवान् हे प्रभो मद्भ्रातरि मय्यप-
२२ राध्यति तं कतिकृत्वः क्षमिष्ये? किं सप्तकृत्वः? यीशुस्तोकं त्वां केवलसप्त-कृत्व इति न वच्मि किन्तु सप्ततिगुणसप्तकृत्व इति।

अपरं स्वदासैः साकं गणनां चिकीर्षुराजवत् स्वर्गराज्यं। तेन राज्ञा २३
गणनायामारब्धायां दशसहस्रमुद्राधारी दासस्तत्समीपमानीतः। किन्तु २४
तस्य परिशोधनाचमत्वात् तत्प्रभुस्तं तदीयजायापुत्रादिसर्व्वस्वञ्च विक्रीय २५
ऋणमादातुमादिशत्। स दासस्तच्चरणयोः पतन् प्रणम्यावदत् हे स्वामिन् २६
त्वं यदि धैर्य्यं धारयसि तर्ह्यहं कृत्स्नं परिशोत्स्यामि। तदा तद्दासस्य प्रभुः २७
सदयः सर्व्वमृणं त्यक्त्वा तं मोचितवान्। किन्तु स भृत्यो बहि र्गत्वा तस्य २८
मुद्रापादशतधारिणं सहदासं दृष्ट्वा तं धृत्वा तत्कण्ठं सम्पीड्योवाच मम यत्
प्राप्यं तत् परिशोधय। तदा स सहदासस्तत्पदयोः पतन् काकुत्या चष्ट त्वं २९
यदि धैर्य्यं धारयसि तर्ह्यहं कृत्स्नं परिशोत्स्यामि। तथापि स तन्न स्वीकृत्य ३०
यावदृणं न परिशोध्यति तावत् तं कारायां बद्धवान्। तेन तस्य सहदासा- ३१
स्तस्य तादृशव्यवहरणं दृष्ट्वातिदुःखिताः, स्वप्रभुमुपागत्य तत् सर्व्ववृत्तान्तं
न्यवेदयन्। तदा तत्प्रभुस्तम् आहूय जगाद रे दुष्ट दास त्वयाहं प्रार्थितः ३२
तव कृत्स्नम् ऋणं त्यक्तवान् यथाहं त्वामदये तथा सहदासं दयितुं तव किं ३३
नोचितं? इत्युक्त्वा तत्प्रभुः क्रुध्यन् ऋणं कृत्स्नं यावन्न परिशोत्स्यति तावत् ३४
प्रहारकेषु तं समार्पयत्। यदि यूयं स्वस्वान्तःकरणैन स्वस्वभ्रातुरपराधान् ३५
न क्षमध्वे तर्हि मम स्वर्गस्थः पितापि युष्मभ्यं तादृक् करिष्यति।

---

१९ ऊनविंशोऽध्यायः।

१ रोगिणां स्वास्थ्यं २ विवाहकथनं १३ शिशूनां याच्यत्वं १६ युवजनोपदेशः २३ धनिनां त्राणं दुःसाध्यं २७ शिष्याणां पारितोषिकम्।

तत एतासु कथासु समाप्तासु यीशु र्गालीलः प्रस्थाय यर्द्दनतटस्थ- १
यिहूदाप्रदेश उपास्थात् तत्रापि लोकेषु तत्पश्चाद् गतेषु स तान् निराम- २
यान् अकरोत्।

ततः फिरूशिनस्तमुपागत्य परीक्षितुं पृष्टवन्तः, केनचित् कारणेन ३
मनुजैः स्वजाया त्याज्या न वा? ततः स प्रत्याचष्ट ईश्वर आदौ पुंस्त्रीस्वरू- ४
पेण मानवान् ससर्ज 'तस्मादुक्तवान् मानुषः स्वमातापितरौ परित्यज्य ५

स्वजायायामासक्तो भविष्यति तौ द्वावेकाङ्गौ भविष्यतः', इति किं युष्माभि-
६ र्नापाठि? तस्मात् तौ पुन र्द्वौ न भविष्यत एकाङ्गौ विद्येते, ईश्वरस्य यत्
७ समयोजयत् मनुष्यस्तन्न भिनत्तु। तदा फिरूशिनः प्रत्यवदन् तर्हि त्याग-
८ पत्रं दातुं स्वस्वजायां त्यक्तुञ्च मुसाः कुतो विधिं ददौ? ततो यीशुरवादीत्
युष्माकं मनसां काठिन्यात् स्वस्वजायां त्यक्तुं युष्मान् मुसा अनुमेने तत् सत्यं
९ किन्तु प्रथमत ईदृशो विधि र्नासीत्। अतोहं युष्मान् वदामि व्यभिचारिणीं
विना यः स्वजायां विहायान्यां विवहति स परदारान् गच्छति यश्च तां
१० त्यक्तां विवहति सोपि परदारान् गच्छति। तदा तच्छिष्यास्तमाचख्युन्
११ चेत् स्वस्त्रिया पुंस एतादृक्सम्बन्धस्तर्हि विवहनं न भद्रं। ततः सोभाषत
येभ्यस्तादृक्सामर्थ्यमदायि तान् विना कोपि मनुजस्तां कथां ग्रहीतुं न
१२ शक्नोति। केचिद् जन्मक्लीवाः, केचिन्नरकृतक्लीवाः, केचिच्च स्वर्गार्थं स्वयं-
कृतक्लीवाः सन्ति ये ग्रहीतुं शक्तास्ते गृह्णन्तु।

१३ अपरं यीशुः शिशूनां गात्रेषु हस्तं दत्त्वा यत् प्रार्थयते तदर्थं तत् समीपं
१४ शिशव आनीयन्त; तस्मात् शिष्या आनयितॄन् भर्त्सितवन्तः। किन्तु यीशु-
१५ राख्यत् शिशून् मामुपागन्तुम् अनुमतिं दत्त तान् मा वारयत, एतादृशा-
जनानां स्वर्गराज्यं। पश्चात् स तेषां गात्रेषु हस्तं दत्त्वा तस्मादयासीत्।

१६ ततः केनचिद् आगत्य स पृष्टः? परमगुरो अनन्तायुः प्राप्तुं मया
१७ किं सत्कर्म्म कर्त्तव्यं? ततो यीशुराख्यत् कुतो मां परमं वदसि विनेश्वरं
कोपि परमो नास्ति किन्त्वनन्तायुः प्राप्तुं यदि वाञ्छसि तर्ह्याज्ञाः
१८ पालयस्व। तदा सोप्राक्षीत् का आज्ञा? ततो यीशुनोक्तं त्वं नरं न हन्याः,
१९ परदारान् न गच्छेः, न चोरयेः, मिथ्यासाक्ष्यं न दद्याः; तव मातापितरौ
२० सम्मन्येथाः, स्वसमीपवासिनि स्वात्मवत् प्रीयेथाः। ततः स युवावदत् आ
२१ बाल्यकालाद् एताः सर्व्वाः पालयेऽहम् इदानीं मम किं न्यूनं? यीशुरुवाच,
चेत् सिद्धतामिच्छसि तर्हि गत्वा स्वीयसर्व्वस्वं विक्रीय दरिद्रेभ्यो देहि
२२ तेन त्वं स्वर्गे धनं प्राप्स्यसि, एहि च मदनुगामी भव। इति श्रुत्वा स युवा
स्वसम्पत्ते र्बाहुल्याद् विषण्णः सन् अयासीत्।

तदा यीशुः शिष्यानवोचद् धनिनां स्वर्गप्रवेशो महादुष्कर इत्यहं युष्मान् २३
सत्यं ब्रवीमि। पुनर्युष्मान् वच्मि धनिनः स्वर्गराज्यप्रवेशात् सूचिरन्ध्र- २४
मध्येन महाङ्गगमनं सुकरम्। इति श्रुत्वा शिष्या अतिचमत्कृत्य व्याहरन् २५
तर्हि केन परित्रातुं शक्यते? ततः स तान् निरीक्ष्यावदत् तन् मानुषाणा- २६
मशाध्यं किन्त्वीश्वरस्य सर्व्वं साध्यम्।

तदा पितरस्तमाचष्ट पश्य वयं सर्व्वं विहाय त्वदनुवर्त्तिनो जाता वयं २७
किं प्राप्स्यामः? ततो यीशुनोक्तं युष्मानहं सत्यं वदामि यूयं मदनुगामिनो २८
भवथ तस्मात् नव्यसृष्टिकाले यदा मानवपुत्रः स्वीयैश्वर्य्यवत्सिंहासने उप-
वेक्ष्यति तदा यूयमपि द्वादशसिंहासनेषूपविश्य इस्रायेलो द्वादशगोष्ठीनां
विचारं करिष्यथ। यो जनो मन्नामार्थं गृहं भ्रातरं भगिनीं पितरं मातरं २९
जायां बालकान् भूमिं वा मुञ्चति स शतगुणं प्राप्स्यति, अनन्तायुषो-
ऽधिकरिष्यति।

---

२० विंशोऽध्यायः।

१ कृषीवलानां दृष्टान्तः १७ ख्रीष्टस्य स्वमृत्युदुःखप्रकाशनं २० द्वौशिष्यावुत्तरेण
नम्रतोपदेशः २९ द्वाभ्यामन्धाभ्यां चक्षुर्दानं।

अग्रीया बहुलोकाः पश्चात् पश्चातीया बहुलोका अग्रा भविष्यन्ति, १
यतः स्वर्गराज्यं तादृशगृहस्थेनोपमं योऽतिप्रगे स्वद्राक्षाक्षेत्रे कर्म्मकरान् नियोक्तुं
गतवान्। ततस्तैः सह प्रत्यहं मुद्रापादभृतिं नियम्य तान् द्राक्षाक्षेत्रं २
प्रेषयामास। पश्चात् प्रथमयामे हट्टं गत्वा कतिपयजनान् अकर्म्मकान् ३
दृष्ट्वा तानाचष्ट यूयमपि मद्द्राक्षाक्षेत्रं यात युष्माकमुचितभृतिं दास्यामि ४
ततस्ते गताः। पुनः स द्वितीयतृतीययामयो र्बहिर्गत्वा तद्वदकरोत्। ततः ५
पञ्चदशमुहूर्त्ते गत्वान्यान् जनान् कर्म्मरहितान् विलोक्य पप्रच्छ कुतो ६
यूयमत्र कृत्स्नं दिनं निष्कर्म्मकास्तिष्ठथ? ते प्रोचुः कोप्यस्मान् कर्म्मणि न ७
नियोजयति; स जगाद यूयमपि मद्द्राक्षाक्षेत्रं यात यथोचितभृतिं
प्राप्स्यथ। सन्ध्यायां सत्यां स क्षेत्रपतिः कार्य्याधीशं प्रोवाच कर्म्मकरानाहूय ८

९ शेषजनमारभ्य प्रथमपर्य्यन्तं तेषां भृतिं देहि। शेषमुहूर्त्ते आगता जनाः
१० प्रत्येकशो मुद्राचतुर्थांशं प्रापुः। प्रथमागता अनुमेनिरे वयमधिकं प्राप्स्यामः
११ किन्तु तेपि मुद्राचतुर्थांशं लेभिरे। ते तदादाय गृहस्थेन सह वाक्कलहं
१२ कृत्वोचुः कृत्स्नं दिनं वयं भानुतापक्लेशाभ्यां परिश्रान्ताः किन्तु शेषागता
१३ मुहूर्त्तमात्रं श्रान्ता अस्मद्भृतिसमां भृतिं तेषामपि दत्तवान्। तेषामेकं स
उवाच हे वत्स त्वाम्प्रति किञ्चिदप्यन्यायं नाकार्षं त्वया मुद्राचतुर्थांशो
१४ नाङ्गीकृतः? तस्मात् तव यत्प्राप्यं तदादाय याहि तवेवैतत्शेषस्यापि
१५ दास्यामि। स्ववित्तस्य यथेच्छवितरणं किं मम नोचितम्? मम बत्त-
१६ प्रदत्वात् किं तवकुदृष्टि र्जायते? इत्थं प्रथमाः शेषाः शेषाश्च प्रथमा
भविष्यन्ति आहूता बहवः किन्तु मनोनीतास्तोकाः।

१७ ततो यीशु र्यिरूशालम्पुरं गच्छन् मार्गे द्वादशशिष्यान् विजनं नीत्वा-
१८ ब्रवीत् पश्यत वयं यिरूशालम्पुरं यामः। तत्र प्रधानयाजकाध्यापकानां
१९ करेषु मनुजपुत्त्रः समर्पिष्यते। ते तु तं हन्तुमादेशयिष्यन्ति तथा तिरष्कर्त्तुं
कशया हन्तुं क्रुशे हन्तुञ्च भिन्नदेशीयानां करेषु समर्पयिष्यन्ति च किन्तु
स तृतीयदिने श्मशानादुत्थास्यति।

२० तदानीं सिवदे र्जाया स्वसुतावानीय यीशोरन्तिकमेत्य प्रणम्य तमनु-
२१ ग्रहमयाचत। यीशुराचष्ट त्वं किं याचसे? साब्रवीत् तव राज्ये ममैतयोः
२२ सुतयोरेकं दक्षिणे वामे चैकमुपवेष्टुमादिश। यीशुरवोचद् यूयं यद्
याचध्वे तन्न बुध्यध्वे यत्कंसेनाहं पास्यामि तेन यूयं किं पातुं शक्ष्यथ?
तथाहं यत् तोये मंक्ष्यामि यूयं किं तत्रावगाढुं शक्ष्यथ? त आचख्युः
२३ शक्ष्यामः। सोब्रवीत् मत्कंसेन पास्यथ मदवगाहनतोये च मंक्ष्यथ;
किन्तु येषां कृते मत्पित्रा पदमेतत् स्थापितं तान् विनान्यं कमपि मद्-
२४ दक्षिणवामयोरुपवेशयितुं मम नाधिकारः। इति श्रुत्वान्यदशशिष्यास्ताभ्यां
२५ भ्रातृभ्यां अकुप्यन्। किन्तु यीशुः स्वान्तिकं तानाहूयावदत्, अन्यदेशीया
भूपतयस्तेषामाधिपत्यं कुर्व्वन्ति ये तु महान्तस्ते तान् शासति यूयमिति
२६ विद्य; किन्तु युष्माकं तदन् न भविष्यति युष्माकं यो महान् बुभूषति

स युष्मान् सेविष्यते यस्य युष्माकं मुख्यो बुभूषति स युष्माकं किङ्करो २७ भूयात्। इत्थं मनुजसुनुः सेवां लब्धुं नहि किन्तु सेवितुं बहूनां त्राणाय २८ स्वप्राणान् दातुञ्चागतवान्।

यिरीहोनगरात् तेषां यानकाले बहुलोकास्तमनुगताः, ततो यावन्धौ २९ मार्गान्तिक उपाविशतां तौ तन्मार्गेण यीशोरागमनं श्रुत्वा प्रोच्चैरवोचतां ३० हे प्रभो दायूदः सन्तान दयस्वावाम्। मौनिनौ भवतमित्युक्त्वा जनास्तौ ३१ तर्जितवन्तस्तथापि तौ ततोप्युच्चैरवदतां भोः प्रभो दायूदः सन्तान दयस्वा- ३२ वाम्। ततो यीशुस्तिष्ठन् तावाहूयाब्रवीत् युवयोः कृतेऽहं किं करिष्यामि? ३३ युवां किमिच्छथः? ताववोचतां भोः प्रभो आवयो र्नेत्राण्युन्मीलय। यीशु- ३४ स्तावनुकम्प्य तयो र्नेत्राणि स्पृष्टवान् तेन तौ दृष्ट्वा तत्पश्चादयासिष्टाम्।

---

२१ एकविंशोऽध्यायः।

१ गर्द्दभीशावकमारुह्य खीष्टेन यिरूशालममागमनं १२ मन्दिराद्बणिजां निःसारणं १८ अफलोडुम्बरतरौ शापः २३ प्रधानयाजकानामनुत्तरत्वं २८ पुत्त्रयो र्दृष्टान्तः ३३ गटस्यकृषीबलयो र्दृष्टान्तश्च।

ततस्तेषु यिरूशालम्पुरान्तिकस्थबैत्फगिग्रामाभ्यर्णस्थजैतुनाख्यगिरिम् १ आगतेषु यीशु र्द्वौ शिष्यौ प्रेषयन् अवोचत् युवामिमं सम्मुखस्थग्रामं गत्वा २ यां सवत्सां बद्धां गर्द्दभीं तत्क्षणात् प्राप्स्यथस्तां मोचयित्वा मामुपानयतं। तत्र यदि कश्चित् किञ्चिद् वक्ति तदा वक्ष्यथः, अस्यां प्रभोः प्रयोजनमास्ते ३ ततः स तदैव प्रेषयिष्यति। एतत् समस्तं कृते सति ४

५ 'यूयं वदत सीयोनः कन्यकां वचनन्त्विदम्।'
पश्य ते नम्रशीलः सन् राजारुह्य च गर्द्दभीं।
किन्तु तद्वत्समारुह्य समायास्यति ते पुरः।

भविष्यद्वादिनोक्तं वचनमिदं सफलमभूत्। पश्चात् तौ शिष्यौ यथानिदेशम् ६ अकुरुतां गर्द्दभीं तद्वत्सञ्चानीय तत्पृष्ठे स्ववस्त्रं पातयित्वा तदुपरि ७ यीशुमारोहयताम्। तदा बहुलोकाः स्ववस्त्रादि पथि विस्तीर्णवन्तः ८

९ केचिल्लोका वृक्षशाखाः छित्वा पथि व्यतन्वन्। ततोऽग्रगामिनः पश्चाद्गामिनश्च प्रोच्चैरवदन् जय जय दायूदः सन्तान य ईश्वरनाम्नायाति स धन्यः
१० सर्व्वोपरिस्थस्वर्गेऽपि जयोस्तु। इत्थं तेन यिरूशालमि प्रविष्टे कोयं कोयम्
११ इतिवाक्येन कृत्स्नं पुरं व्याप्तं। लोका अवदन् गालील्प्रदेशीयनासिरीयभविष्यद्वक्तृयीशुरयम्।

१२ 　ततो यीशुरीश्वरमन्दिरं प्रविश्य तन्मध्यात् क्रयविक्रयकृतो बहिर-
१३ करोत् बणिजां मुद्रासनं पारावतविक्रेतॄणामासनञ्च न्यूब्जीकृतवान् तानवादीत् लिखितमिदमास्ते 'मम गृहं प्रार्थनागेहमिति ख्यातिं यास्यति
१४ किन्तु यूयं तद् दस्युगह्वरं कुरुत'। ततोऽन्धखञ्चलोकेषु तमुपागतेषु स
१५ तान् स्वस्थान् अकार्षीत्। यदा मुख्ययाजकाध्यापकैस्तत्कृताश्चर्य्यकर्म्माणि दृष्टानि मन्दिरे च जय जय दायूदः सन्तानेति बालानामुच्चध्वनिरश्रावि तदात्य-
१६ कुप्यत यीशुरपृच्छि च एते यद्वदन्ति तत् किं त्वया श्रूयते? ततस्तेनोक्तं श्रूयते। यथा,

'स्तन्यपायिशिशूनाञ्च बालकानाञ्च वक्त्रतः।
स्वकीयं महिमानं हि त्वं प्रकाशयसि स्वयम्।'

१७ इति वाक्यं यूयं किं नापठत? ततः स तान् त्यक्त्वा पुराद् बैथनियाग्रामं यात्वा तत्र क्षपां यापितवान्।

१८ 　अनन्तरं प्रगे यीशुः पुन र्नगरं गच्छन् क्षुधार्त्तो बभूव। ततो मार्गपार्श्वे
१९ उडुम्बरतरुं निरीक्ष्य तदन्तिकं गत्वा पत्राणि विना किमपि न प्राप्य तम-
२० वदत् पुनः कदापि त्वयि फलं न भवेत् तस्मात् तदुडुम्बरोऽशुष्यत्। तदवलोक्य शिष्या आश्चर्य्यं मन्यमाना अभाषन्त, अहो उडुम्बर एतावत् त्वरया
२१ शुष्कवान्। ततो यीशुस्तानवादीत् युष्मानहं सत्यं ब्रवीमि यदि यूयं न सन्दिह्य प्रतीथ तर्हि यूयमपि केवलोडुम्बरं प्रतीत्थं कर्त्तुं शक्ष्यथ नहि किन्तु त्वं उत्थाय जलधौ पतेति गिरिम्प्रति गदिते तदैव तद् घटिष्यते;
२२ तथा विश्वस्य प्रार्थ्य यद् याचिष्यध्वे तदेव लप्स्यध्वे।

ततो मन्दिरं प्रविश्योपदेशनकाले मुख्या याजकाः प्राञ्चश्च तमुपागत्या २३
प्राचुः, त्वं कस्याज्ञयैतानि कर्म्माणि करोषि? केन वा तुभ्यमेतादृशी
आज्ञादायि? ततो यीशुरुनोक्तं अहमपि युष्मान् कथामेकां पृच्छामि २४
यदि तदुत्तरं दातुं शक्नुथ तदा कस्याज्ञयाहम् एतानि करोमि तद्
युष्मान् वक्ष्यामि। योहनो मज्जनं कस्याज्ञयाभूत्? ईश्वरस्य किं मानवस्य? २५
ततस्ते परस्परं विविच्यावोचन् यदीश्वरस्येति वदाम तर्हि यूयं कुतस्तं
न प्रत्यैत कथामेतां प्रक्ष्यति। मनुष्यस्येति वक्तुञ्च लोकेभ्यो बिभीमः, यतः २६
सर्व्वे योहनं भविष्यद्वादिनं विदुः। अतस्ते यीशुं प्रत्यवदन् तद्वयं न विद्मः, २७
तदा सोवदत् तर्हि यस्याज्ञयाहमेतानि करोमि तदहमपि युष्मभ्यं
न कथयिष्यामि।

अत्र युष्माभिः किं बुध्यते? एकस्य द्वौ पुत्त्रावास्तां स पुत्त्रमेकमुपा- २८
गत्यावादीत् हे पुत्त्र त्वमद्य मम द्राक्षाक्षेत्रे कर्म्म कर्त्तुं याहि। सोवदत् न २९
यास्यामि किन्तु शेषेऽनुतप्य यातवान्। ततः सोन्यपुत्त्रमुपागत्य तथैवा- ३०
वोचत् स प्रत्यवादीत् भद्रं महेच्छ यामि किन्तु नागमत्। एतयोः पुत्त्रयोः ३१
कः पितुरादेशं पालितवान्? तैरुक्तं प्रथमपुत्त्र इति। तदा यीशुना ते प्रोक्ताः,
अहं युष्मान् सत्यं वच्मि चण्डाला वेश्याश्च युष्मदग्रे ईश्वरराज्यं प्रविशन्ति।
यतो योहन् धर्म्मपथेन युष्मानुपागमत् तं यूयं न प्रत्यैत किन्तु चण्डाल- ३२
वेश्यास्तं प्रत्ययन् तद् दृष्ट्वापि युष्माभिः प्रत्ययार्थं नाखिद्यत।

अपरमेकं दृष्टान्तं शृणुत कश्चिद् गृहस्थः क्षेत्रे द्राक्षावृक्षान् रोपयित्वा ३३
तच्चतुर्दिक्षु वारणीं विधाय तन्मध्ये द्राक्षायन्त्रमस्थापयत् मञ्चञ्च निर-
मिमीत ततः कृषीवलेषु तत्क्षेत्रं समर्प्य स्वयं दूरदेशं गतवान्। ततः फल- ३४
समय उपस्थिते स फलानि प्राप्तुं कृषीवलानामन्तिकं स्वदासान् प्रेषित-
वान्। किन्तु कृषीवलास्तद्दासान् धृत्वा कञ्चन प्राहरन् कञ्चन पाषाणैरघ्नन् ३५
कञ्चन चावधिषुः। ततः सोधिपः प्रथमतोऽधिकदासान् प्रैषयत् किन्तु ते ३६
तान् प्रत्यपि तथैवाचरन्। ततो मत्पुत्त्रे गते तमादरिष्यन्तीति वदन् स ३७
स्वपुत्त्रं तेषामन्तिकं प्रेषयामास। किन्तु ते कृषीवलाः तत्पुत्त्रं दृष्ट्वा परस्पर- ३८

मिति मन्त्रयामासुः, एष उत्तराधिकारी, आगच्छत वयमेनं हत्वाधिकारं
३९ स्वीयं करवामहै। ततस्ते तं धृत्वा द्राक्षाक्षेत्राद् वहिष्कृत्वावधिषुः। यदा
४० द्राक्षाक्षेत्रपतिरागमिष्यति तदा तान् कृषीबलान् किं करिष्यति? ते प्रत्य-
४१ वोचन् तान् पापिनो महायातनया हनिष्यति ये च समये फलानि
४२ दास्यन्ति तादृक्कृषीबलेषु क्षेत्रं समर्पयिष्यति। तदा यीशुस्तान् अवादीत्

'स्थपतयः करिष्यन्ति ग्रावाणं यन्तु तुच्छकम्।
प्रधानप्रस्तरः कोणे स एव संभविष्यति।
एतत् कर्म्म परेशस्याद्भुतं नो दृष्टितो भवेत्'।

४३ धर्म्मपुस्तके लिखितमिदं वचनं युष्माभिः किं नापाठि? अतो युष्मानहं
वदामि युष्माकं समीपाद् ईश्वरस्य राज्यं नायिष्यते फलोत्पादकेभ्योऽन्य-
४४ देशीयेभ्यो दायिष्यते च। यो जन एतस्मिन् दृषदि पतिष्यति तं भंक्ष्यति
४५ किन्तु यदुपर्य्येष पतिष्यति तं धूलिवत् चूर्णयिष्यति। तदानीं प्रधान-
याजकैः फिरूशिभिश्च तस्मिन् दृष्टान्ते श्रुते सति स तेषु कथितवान्
४६ इति बुद्ध्वा ते तं धर्त्तुं चेष्टितवन्तः; किन्तु लोकेभ्यो भयं कृतवन्तः यतो
लोकास्तं भविष्यद्वादिनं विदुः।

---

## २२ द्वाविंशोऽध्यायः।

१ राजपुत्त्रविवाहदृष्टान्तः १५ राजकरदानोपदेशः २३ श्मशानादुत्थानोपदेशः
२४ मुख्याज्ञानिर्णयः ४१ खीष्टस्य स्वस्मिन् फिरूशिनां निरुत्तरत्वञ्च।

१　तदनन्तरं यीशुः दृष्टान्तेन पुनस्तान् अवादीत् स्वर्गराज्यम् एतादृश-
२ राजस्य समं, यो निजं पुत्त्रं विवाहयन् सर्व्वनिमन्त्रणीयजनान् आह्वातुं
३ दासान् प्रेषयामास; किन्तु त आगन्तुं नैच्छन्। ततो राजा पुनरन्यान्
४ दासान् इत्युक्त्वा प्रेषयामास निमन्त्रितान् वदत, पश्यत मदीयभोज्यं
५ सज्जितमास्ते स्वीयवृषादीन् पुष्टजन्तूंश्च मारयित्वा सर्व्वभक्ष्याणि सज्जित-
६ वान् यूयं विवाहम् आगच्छत। तथापि तेऽवज्ञाय कश्चित् स्वक्षेत्रं कश्चिद्
७ वाणिज्यं प्रतीत्थं स्वस्वपथं गतवन्तः। केचिच्च तस्य दासान् धृत्वा दौर्जन्यं

व्यवहरन्तस्तान् अवधिषुः। ततः स राजा तद्वार्त्तां निशम्य महाक्रोधेन ८
सैन्यानि प्रहित्य तान् बधकान् हत्वा तेषां पुरं दाहयामास। पश्चाद् ९
राजा स्वभृत्यान् उवाच, विवाहीयभोज्यं सज्जीकृतमस्ति किन्तु निम-
न्त्रिता न योग्या अतो यूयं राजपथं गत्वापरान् यावतो जनान् पश्यथ
तावत एव विवाहीयभोज्याय निमन्त्रयत। ततस्ते दासा मार्गं गत्वा भद्रा- १०
भद्रान् यावतो लोकान् ददृशुस्तावतः संगृह्यानिन्युः; तेनाभ्यागतजनै
र्विवाहगृहं पूर्णं चक्रे। तदा स राजाभ्यागतान् द्रष्टुमभ्यन्तरम् आगत्य तत्र ११
विवाहीयवाससा विहीनमेकं विलोक्य जगाद हे मित्र त्वं विवाहीयवसनं १२
विना कुतोऽत्र प्रविष्टवान्? ततः स निरुत्तरो बभूव। तदानीं राजा सह- १३
चरान् आदिदेश, अस्य करचरणानि बद्धा यत्र रोदनं दन्तघर्षणञ्च
जायते तत्र बहिरन्धकारे निःक्षिपत। इत्थम् आहूतानां बहुत्वेऽपि मनो- १४
नीतानामल्पत्वं जायते।

तदनन्तरं फिरूशिनो गत्वा केन प्रकारेण तं कथनेनोन्माथे पातयन्ति, इति १५
मन्त्रयित्वा हेरोदीयलोकैः सार्द्धं निजशिष्यान् प्रहित्य तमवादयन्, हे १६
गुरो भवान् सत्यः सत्यमीश्वरपथम् उपदिशति च तत्र कमपि नानुरुन्धते
कमपि मनुजं नापेक्षते च तद् वयं जानीमः। अतः कैसरराजाय करो- १७
ऽस्माभि र्देयो न वेत्यत्र भवतः कीदृग्बोधो जायते? तद् वदतु। यीशुस्तेषां १८
खलतां बुद्ध्वावादीत्, रे कपटिनः कुतो यूयं मां परीक्षध्वे? करमुद्रां मां
दर्शयत। तदनन्तरं ते मुद्रायाश्चतुर्थपादमेकं तस्य समीपमानीतवन्तः १९
तदा स तान् अपृच्छत्, इयं मूर्त्तिः कस्य? इदं नामधेयञ्च कस्य? ततस्ते २०
कथितवन्तः कैसरस्य राज्ञः। ततः स उक्तवान् कैसरस्य द्रव्यं कैसराय २१
दत्त, ईश्वरस्य द्रव्यम् ईश्वराय दत्त। एतद्वाक्यं निशम्य ते जना २२
विस्मयं प्राप्य तं परित्यज्य गतवन्तः।

तदानीं सिदूकिनोऽर्थात् श्मशानान्नोत्थानं भवतीति ये वदन्ति ते २३
यीशुमुपागम्याप्राचुः, गुरो कश्चन मानुषश्चेन्निरपत्यो म्रियते तदा तद्- २४
भ्राता तत्स्त्रीयं विवहन् भ्रातुर्वंशमुत्पादयिष्यतीति मुसा आदिशत्।

२५ किन्त्वस्माकं केचित् सप्तसोदरा आसन् तेषां ज्येष्ठः कन्यामेकाम् उद्वाह्य
२६ मृतिकाले स्वस्य निरपत्यत्वात् तां जायां स्वभ्रातरि समार्पयत्। द्वितीय-
२७ तृतीयादिसप्तमान्तास्तथाकुर्व्वन्। शेषे सापि ममार। मृतोत्थानकाले
२८ तत्सप्तानां जनानां सा कस्य जाया भविष्यति? यतः सर्व्वैरेव सोढा।
२९ यीशुः प्रत्याचष्ट यूयं धर्म्मपुस्तकमीश्वरशक्तिञ्च न बुद्धा भ्रान्ताः। उत्था-
३० नात् परं ते न विवहन्ति वाग्दत्ताश्च न भवन्ति हि किन्त्वीश्वरस्य स्वर्ग-
३१ दूता इव भवन्ति। पुन र्मृतोत्थाने युष्मान् प्रतीश्वरोक्तिरेषा यथाहम् इब्रा-
३२ हीम ईश्वर इस्हाक ईश्वरो याकुव ईश्वरश्च, इति किं युष्माभि र्नापाठि?
३३ किन्त्वीश्वरो जीवतां लोकानां प्रभु र्न मृतानां। इति वचनं श्रुत्वा लोक-
समूहास्तदुपदेशमाश्चर्य्यं ज्ञातवन्तः।

३४ ततः परं तेन सिदूकिनो निरुत्तरीकृता इति वार्त्तां निशम्य फिरू-
३५ शिनु मिलितेषु, तेषाम् एको व्यवस्थापको यीशोः परीक्षां कर्त्तुं तं परि-
३६ पृष्टवान्, हे गुरो व्यवस्थानां मध्ये काज्ञा श्रेष्ठतरा? ततो यीशुरुवाच
३७ त्वं सर्व्वान्तःकरणेन सर्व्वप्राणैः सर्व्वचित्तेन च प्रभौ परमेश्वरे प्रेम कुरु।
३८ एषा प्रथमा श्रेष्ठतरा चाज्ञा। द्वितीयाज्ञा च तया समा तव समीपवासिनि
३९ स्वस्मिन् इव प्रेम कुरु। एतयोरादेशयोरेव सकला व्यवस्था भविष्यद्वा-
४० दिनां वाक्यानाञ्च भारो विद्यते।

४१ तदनन्तरम् एकस्थाने संस्थितान् फिरूशिनो यीशुः परिपृष्टवान्
४२ ख्रीष्टः क इत्यत्र युष्माकं कीदृग् बोधो जायते? स च कस्य सन्तानः? ततः
४३ परं ते प्रत्यवदन् दायूदः सन्तान इति। ततः स उक्तवान् तर्हि दायूद्
केन प्रकारेण तं स्वयं प्रभो इति वदति? यथा,

४४ 'मम प्रभुमिदं वाक्यमवदत् परमेश्वरः।
तव शत्रूनहं यावत्पादपीठं करोमि न।
तावत्कालं मदीये त्वं दक्षपार्श्व उपाविश।'

४५ अतो दायूद् चेत्तं प्रभुं वदति तर्हि स कथं तस्य पुत्रो भवति? इति प्रतिवक्तुं
४६ तेषां कोपि न शक्तः; तदारभ्य तं किञ्चित् प्रष्टुं कस्यापि नाक्षोभः।

## २३ त्रयोविंशोऽध्यायः।

१ फिरूशिअध्यापकानां वाक्यस्य मान्यत्वे आचारत्यागे चोपदेशः १३ तेषां सन्तापप्रकाशः २४ यिरूशालमविनाशे भविष्यद्वाक्यञ्च।

यीशुर्लोकान् शिष्यांश्चाख्यत् अध्यापकफिरूशिनो मुशासने उपवि- १
शन्ति तस्मात् ते यद्यत् मानितुमादिशन्ति तन्मन्यध्वं पालयध्वञ्च किन्तु २
तेषां कर्म्मवत् कर्म्म मा कुरुत; यतस्तेषां वाक्यमेव सारं कार्य्यं किमपि नास्ति। ३
तैर्दुर्वाह्यगुरुभारो मानुषस्कन्धेषु समर्प्यते स्वयन्त्वङ्गुल्यापि न सार्य्यते। ४
तैर्लोकदर्शनमात्रार्थं सर्व्वकर्म्म क्रियते वस्तुतो दृश्यलिपि विस्तार्य्य धार्य्यते ५
स्ववस्त्रेषु च दीर्घग्रन्थि धार्य्यते भोजनगृह उच्चस्थानं भजनगृहे मुख्यासनं ६
हट्टे लोकानां नमस्क्रिया गुरुत्वभाषणञ्चैषु प्रीयते। यूयन्तु गुरुम्मन्या न ७ ८
भवत यतो युष्माकमेकएव गुरुः ख्रीष्टो यूयञ्च परस्परभ्रातरः। भुवि कमपि ९
पितेति न सम्बोध्यध्वं यतो युष्मत्पिता स्वर्गस्थ एकएव। यूयं प्रभुम्मन्या १०
न भवत यतो युष्माकमेकएव प्रभुः ख्रीष्टः। युष्माकं यः श्रेष्ठः स युष्मान् ११
सेविष्यते। यतो यः स्वमुन्नतं करोति स नतो भविष्यति यस्तु नतं करोति १२
स उन्नतो भविष्यति।

हा कपट्यध्यापकफिरूशिनो यूयं मानुषस्वर्गगमनमार्गं रुन्ध स्वयं १३
तन्मध्यं न प्रविशथ प्रवेशोद्यतान् वारयथ। हा कपट्यध्यापकफिरूशिनः १४
छलाद् दीर्घं प्रार्थ्य विधवासर्व्वस्वं ग्रसथ महादण्डं लप्स्यध्वे। हा कपट्य- १५
ध्यापकफिरूशिन एकं स्वधर्म्मिणं कर्त्तुं सिन्धुभुवौ प्रदक्षिणीकुरुथ कञ्चन
प्राप्य स्वेभ्यो द्विगुणनरकपात्रं कुरुत। अन्धपथदर्शका वत यूयं वदत मन्दि- १६
रेण शप्ते किमपि न जायते किन्तु यो मन्दिरस्वर्णेन शपते स बाध्यते। १७
हे मूढा अन्धाश्च स्वर्णस्वर्णपावनमन्दिरयोः किं श्रेष्ठं? पुन र्वदथ यज्ञवेद्या १८
शप्ते किमपि न जायते किन्तु यो तत्रस्थदानेन शपते स बाध्यते। हे मूढा १९
अन्धाश्च दानदानपावनयज्ञवेद्योः किं श्रेष्ठं? अतः केनापि यज्ञवेद्या शप्ते २०
वेदितत्रस्थसर्व्वैः शप्यते केनापि मन्दिरेण शप्ते मन्दिरतन्निवासिभ्यां २१
शप्यते। केनापि स्वर्गेण शप्ते ईश्वरसिंहासनतदुपविष्टाभ्यां शप्यते। २२

२३ हा कपट्यध्यापकफिरूशिनो यूयं पोदिनाभितच्छत्राजीरकानां दशमांशान्
दत्थ किन्तु व्यवस्थाया गुरुन्यायदयाविश्वास्यतास्त्यजथ ताः पालयित्वान्या-
२४ लङ्घनं युष्माभिः कर्त्तव्यं। हे अन्धमार्गदर्शका यूयं मशकं वहिष्कृत्य महाङ्गं
२५ ग्रसथ। हा कपट्यध्यापकफिरूशिनो यूयं पात्राणां वहिर्म्मृष्ठ दौरात्म्या-
२६ धर्म्माभ्यामन्तरन्तु पूर्णमस्ति। हे अन्धफिरूशिनोऽग्रे पात्राणामन्तर्म्मृष्ठ तेन
२७ वहिरपि मार्ज्जिते। हा कपट्यध्यापकफिरूशिनो यूयं शुक्लीकृतश्मशानवत् स्थ
२८ यथा श्मशानं वहिः सुदृश्यमन्तस्तु मृतास्थिमलाभ्यां पूर्णं तथा यूयं लोक-
२९ दृष्टौ वहिर्धार्म्मिका अन्तस्तु कापट्याधर्म्माभ्यां पूर्णाः। वत कपट्यध्यापक-
फिरूशिनो यूयं भविष्यद्वादिश्मशानानि निर्म्माय साधुश्मशानानि शोभयथ
३० वदथ च यदि च वयम् अस्माकं पूर्व्वपुरुषाणां समये अस्थास्याम तर्हि तद्व
३१ भविष्यद्वादिनां रक्तपातनापराधेन नापरात्स्याम। इत्थं यूयं भविष्यद्-
३२ वादिनां घातकानां सन्ताना भवथेति साक्ष्यं स्वयमेव प्रदत्थ। अतएव
३३ युष्माभिः स्वकीयपूर्व्वपुरुषाणां परिमाणपात्रं परिपूर्णं क्रियतां। हे
सर्पाः हे कृष्णसर्पाणां वंशाः यूयं केन प्रकारेण नरकदण्डात् त्राणं
लप्स्यध्वे।

३४ पश्यताहं भविष्यद्वादिबुद्धिमदध्यापकान् युष्मानुप प्रेषयिष्ये तेषान्तु
कियतो हनिष्यथ क्रुशे च हनिष्यथ कञ्चन भजनगृहे कशया प्रहरिष्यथ
३५ पुराद् आ पुरं ताडयिष्यथ च; तस्मात् सुपुंहाबिल आ रक्तपातात् मन्दिर-
यज्ञवेदिमध्ये युष्मद्धतविरिखीयपुत्त्रसिखरीयरक्तपातं यावद् च देशे यति-
३६ साधूनां रक्तानि पतन्ति तदपराधदण्डा युष्मासु वर्त्तिष्यन्ते। युष्मान् सत्यं
३७ वच्मि विद्यमानलोकेषु ते वर्त्तिष्यन्ते। हे यिरूशालम् हे यिरूशालम् त्वं
भविष्यद्वादिनो हंसि त्वामुपप्रेषितान् पाषाणै र्हंसि पक्षाधः शिशुसं-
३८ ग्राहिणी कुक्कुटीवाहं त्वदपत्यानि संग्रहीतुं कतिकृत्व ऐच्छं त्वन्तु न सम-
३९ मंस्थाः। पश्यत युष्मद्वासभूरुच्छिन्ना त्यक्ष्यते युष्मान् सत्यं वदामि यः पर-
मेश्वरनाम्नायाति स धन्य इति यावन्न वक्ष्यथ तावन्मां पुन र्न द्रक्ष्यत।

———

## २४ चतुर्विंशोऽध्यायः।

१ मन्दिरनाशस्य भविष्यद्वाक्यं ३ विनाशकालघटनं ९ शिष्यदुःखं १५ लोकपलायनं २३ मृषाख्रीष्टानामुपस्थितिः २९ यिहूदिदेशदुर्दशा ३२ उडुम्बरवृक्षदृष्टान्तः ३६ प्रलयकालसमदुर्दशा ४२ सचेतनत्वोपदेशः ४५ विश्वास्याविश्वास्यदासदृष्टान्तश्च।

मन्दिरान् निर्गच्छन्तं यीशुं मन्दिरनिर्म्माणं दर्शयितुं शिष्या आगताः। १
तदा स आख्यत् यूयं किम् एतानि न पश्यथ? युष्मानहं सत्यं वच्मि एतन्नि- २
चयने पाषाणोपरि पाषाणैकोऽपि न स्थास्यति सर्व्वं भुवि पतिष्यन्ति।

तस्मिन् जैतुनाद्रावुपविष्टे शिष्यास्तमुपागत्य निर्जने ऽप्राक्षुः, एता घटनाः ३
कदा भविष्यन्ति? त्वदागमयुगान्तयोश्च किं चिह्नं? तद्वद। यीशुस्ताना- ४
ख्यत् अवधत्त कोऽपि युष्मान् न भ्रमयेत्। बहवो मन्नामाश्रागमिष्यन्ति ५
ख्रीष्टोऽहमेवेति वदन्तो ऽनेकान् भ्रमयिष्यन्ति। यूयं संग्रामयुद्धाडम्बरं ६
श्रोष्यथ तेनास्थिरा मा भवत, एतान्यवश्यं घटिष्यन्ते युगान्तस्तु न तदा। ७
वस्तुतो देशविपक्षो देशो राज्यविपक्षं राज्यं भविष्यति स्थानेषु दुर्भिक्ष- ८
महामारीभूकम्पा भविष्यन्ति। एतानि दुःखारम्भकानि।

तदा लोका युष्मान् दुःखानि भोजयितुं परकरेषु समर्पयिष्यन्ति हनि- ९
ष्यन्ति च मन्नामहेतो यूयं सर्व्वदेशिनां घृण्या भविष्यथ। बहुविघ्नमाप्य १०
परस्परमृतीयित्वा एकोऽन्यं परकरेषु समर्पयिष्यति। बहुमिथ्याभविष्यद्- ११
वादिन उपस्थायानेकान् भ्रमयिष्यन्ति। दुष्कर्म्मबाहुल्यादनेकेषां प्रेम शीतलं १२
भविष्यति। यस्तु शेषं यावत् धैर्य्यं धरिष्यति स त्रायिष्यते। सर्व्वदेशिनः १३
प्रति साक्ष्यार्थं राजीयैतद्वार्त्ता जगति प्रचारिष्यते तथा सति युगान्तो १४
भविष्यति।

अतो यत् सर्व्वनाशिघृण्यवस्तु दानियेलभविष्यद्वादिनोक्तं तद् यदा- १५
पुण्यस्थानोपस्थितं द्रक्ष्यथ (यः पठति स बुध्यतां) तदा ये यिहूदिदेशे १६
तिष्ठन्ति ते गिरीन् प्रति पलायन्तां यश्च गृहोपरि तिष्ठति स गृहात् १७
किमप्यानेतुमधो नावरोहतु यः क्षेत्रे तिष्ठति सोऽपि वस्त्रमानेतुं न परा- १८
वर्त्ततां। तदा गर्भवतीस्तन्यदात्रीणां दुर्गति र्भविष्यति। अतो युष्माकं १९

२० पलायनं शीतकाले विश्रामवारे वा न भवतीत्यर्थं प्रार्थयध्वं। आ जगदा-
२१ रम्भात् यादृक्क्लेशो न जातः तादृक् तदा भविष्यति। तत्क्लेशकाले
२२ न्यूने न कृते कस्यापि प्राणिनो रक्षा न भविष्यति मनोनीतानान्तु कृते
स कालो न्यूनयिष्यते।

२३ पश्य ख्रीष्टोऽत्रास्ति वा तत्रास्ति तदा चेत् कश्चिदिति वक्ष्यति तथापि
२४ न प्रतीत। यतो मृषाख्रीष्टभविष्यद्वादिन उपस्थाय महाचिह्नाद्भुत-
लक्षणानि प्रकाशयिष्यन्ति चेत् सम्भवति तर्हि मनोनीतानपि भ्रमयि-
२५ ष्यन्ति। पश्यत घटनातः प्राक् युष्मान् ज्ञापितवान्। अतः पश्यत स प्रान्त-
२६ रेऽस्तीत्युक्तेऽपि मा वहिर्याति वा पश्यत सोऽन्तःपुरेऽस्तीत्युक्तेऽपि मा प्रतीत।
२७ यथा तडित् प्राच्या निर्गत्य पश्चिमां यावत् प्रकाशते तथा मनुजपुत्त्र-
२८ स्याप्यागमनं भविष्यति। यत्र शवोऽस्ति तत्र गृध्रा मिलन्ति।

२९ तत्क्लेशात् परं भानुभा लोपस्यते चन्द्रोऽपि न भास्यति नाकाद्भानि
३० पतिष्यन्ति ग्रहाश्च विचलिष्यन्ति। तदाकाशे मनुजसुतस्य चिह्नं द्रक्ष्यते
स्वशक्तिमहातेजोभि र्मेघारूढं मनुजपुत्त्रं नाकेनायान्तं दृष्ट्वा मह्याः सर्व्व-
३१ वंशीया विलपिष्यन्ति। तदा तेन प्रेषिता महाशब्दतूरीवादकदूता
नभोधस्थजगच्चतुर्दिशस्तन्मनोनीतान् संग्रहीष्यन्ति।

३२ उडुम्बरपादपाद् दृष्टान्तं यूयं शिक्षध्वं यदा स उडुम्बर पादपो
३३ नवीनं शाखापत्त्रादि परिगृह्णाति तदानीं ग्रीष्मसमयः समीपागतइति
यूयं प्रजानीथ तथैवैता घटनाः संदृष्ट्वा तत् समयः समुपस्थितः परिज्ञा-
३४ स्यथ। अहं युष्मान् सत्यं वदामि इदानीन्तनलोकानां मरणात् पूर्व्वं तानि
३५ सर्व्वाणि सम्यग् घटिष्यन्ते। आकाशपृथिव्यो र्विचलितयोः सत्योरपि
मदीयं वचनं नैव विचलिष्यति।

३६ मत्तातादन्यस्तद्दिनदण्डौ ज्ञापयितुं न शक्तः स्वर्गीयदूताश्च न।
३७ नोहनामके सति यथाभूत् तथा मनुजपुत्त्रागमेऽपि भविष्यति। वस्तुतो
३८ जलाप्लावनात् प्राक् यावन् नोहः पोतं नारोहत् आप्लाविजलमेत्य सर्व्वं
३९ नानयत तावद् यथा जना भोजनपानविवहनविवाहनेषु प्रावर्त्तन्त तथा

मनुजपुत्त्रागमेऽपि भविष्यति। तदा क्षेत्त्रस्थयो र्द्वयोरेको धारिष्यतेऽन्य- ४०
स्त्यक्ष्यते। पेषणीपिषन्त्यो र्योषितोरेका धारिष्यतेऽन्या त्यक्ष्यते। ४१

युष्मत्प्रभुः कुत्र दण्ड आयास्यतीति न वित्थ तस्मात् सचेतनास्तिष्ठत। ४२
कुत्र यामे स्तेन आयास्यतीति गृही चेद् वेत्ति तर्हि जाग्रत् सन्धिं कर्त्त- ४३
यितुं वारयति तद् वित्थ। यूयमपि सज्जध्वं यद् घटिकायां न बुध्यते ४४
तद्दैव मनुजपुत्त्र एष्यति।

स्वपरिवारान् समये भोजयितुं प्रभु र्यं दासमध्यक्षं करोति तादृग्- ४५
विश्वास्यो बुद्धिमान् कः? प्रभुरेत्य यं दासं तथा कुर्व्वन्तं पश्यति स धन्यः। ४६
अहं युष्मान् सत्यं प्रवदामि स प्रभुस्तं दासं स्वकीयसर्व्वस्वाधिपतिं ४७
करिष्यति। अपरं प्रभु र्विलम्बेन समागमिष्यतीति चिन्तयित्वा यस्तु ४८
दुष्टोदासः स्वसहदासान् प्रहर्त्तुं मत्तजनैश्च साकं भोक्तुं पातुञ्च संप्रवर्त्तते ४९
स दासो यदा नैवापेक्षां करोति यञ्च दण्डं नैव जानाति तस्य प्रभुस्तद्दैव ५०
समुपस्थास्यति तञ्च दासं दण्डयित्वा यत्र रोदनं दन्तै र्दन्तघर्षणञ्च प्रजा- ५१
येते तत्र स्थाने कपटिभि र्जनैः सार्द्धं तस्य दशां निरूपयिष्यति।

---

२५ पञ्चविंशोऽध्यायः।

१ दशकन्यादृष्टान्तः १४ दूरदेशगतोत्तमर्णदासयो र्दृष्टान्तः ३१ विचारकाल-कथनञ्च।

प्रदीपान् आदाय वरं साक्षात् कर्त्तुं गतदशकन्याभिः स्वर्गराज्यस्य १
साम्यं भावि। तत्कन्यानां पञ्च बुद्धिमत्यः पञ्च निर्बुद्धयः। निर्बुद्धयः प्रदीपैः २ ३
सह तैलं नानयन् सुबुद्धयस्तु प्रदीपान् पात्रे तैलञ्चानयन्। वरे विल- ४
म्बिते सर्व्वा निद्रां गताः। अर्द्धरात्रे वर आगच्छति तं साक्षात् कर्त्तुं ५ ६
यातेति रवोभूत् ताः कन्या उत्थाय प्रदीपान् समसज्जयन्। तदा निर्बुद्धयः ७
सुबुद्धीरवदन् तैलं दत्तास्मत् प्रदीपा निर्व्वान्ति स्म। तदनन्तरं सुबुद्धयः ८ ९
कन्याः प्रत्यवदन् तैले दत्ते सति यदि युष्माकमस्माकञ्च तैलानाम् अल्पता
जायते; तस्माद् गत्वा स्वार्थं विक्रेतृभ्यस्तैलं यूयं क्रीणीत। ततः परं तासु कन्यासु १०
तैलं क्रेतुं गतासु सतीसु वरः समागच्छत् तदा यास्तु सुसज्जिता आसन्